# जीवन में हो उमंग, मधुरता के संग.



तुलसी रोपूँ अपने अंगना
इसकी वृद्धि कभी रूके ना



अंधे चाचा कंवर बेचारे,
माता-पिता सा मुझे दुलारें
मैं भी उनके साथ जाउंगी,
उनको सड़क पार कराउंगी.



अरे हाँ। डैडी को हो गया है फ्लू
और मम्मी ने कहा है कि मैं उन्हें
दवा पिला दूं



छुट्टी ले गंगूबाई की मौज
बर्तनों की जुटी है फौज
कहाँ से आई इतनी आफत
मेरी, राधा मौसी को मुसीबत



जब तक पेटू राजू आए
काजू बरफी मेरी चट कर जाए
उससे पहले स्मिता खाले
चाहे मुझे बिल्कुल न मिले.



टॉमी जब भी करता मस्ती
उसको चोट बहुत है लगती
डॉक्टर की दी दवा लगाऊँ
उसके ज़ख्मों को सहलाऊँ



राजीव अंकल सुधारें कार
मेरी मदद उन्हें दरकार
मैंने उनका हाथ बंटाया
मम्मी सोचें काम बढ़ाया



चंदा टीचर पढ़ातीं हिसाब
मैंने उनको दिए गुलाब
कितने, इसका नहीं हिसाब




रावलगांव

मीठी-मीठी कामयाबी का रस... बरसों-बरस.


CHANDAMAMA

कविहृदयम् -

# अनुचितस्थितिस्थं जीवनम्

**अन्तःप्रतप्तमरुसैकतदह्यमान-**
**मूलस्य चम्पकतरोः क्व विकासचिन्ता ।**
**प्रायो भवत्यनुचितस्थितिदेशभाजां**
**श्रेयः स्वजीवनपालनमात्रमेव ।।**

''मरुभूमौ कदाचित् चम्पकवृक्षः उत्पद्यते । मरुश्च सिकतामयी । सूर्यतापात् सिकताः सदा अत्युष्णाः भवन्ति । तत्रापि भूमिस्थाः सिकताः तप्ताङ्गाराः इव दहन्ति । एतादृशे सिकतामये प्रदेशे यदि चम्पकवृक्षस्य मूलानि भवन्ति तर्हि सः वृक्षः कथं वा वृद्धिं प्राप्तुम् अर्हति ? एवम् एव यः अनुचिते प्रदेशे जीवनं करोति तस्य जीवनम् अपि । तस्य जीवने प्रगतिः गगनकुसुमायते ।''

मानवजीवनं कष्टमयं, विघ्नबहुलं, दुस्तरं च । अधुनातने काले तु जीवनं नितरां कष्टमयं जातम् अस्ति । अहितकरी स्पर्धा सर्वत्र दृश्यते । अनिच्छता अपि सर्वेण अत्र भागः वोढव्यः एव भवति । भ्रष्टाचार-दुष्टप्राबल्यादीनां कारणतः जीवनस्य दारुणता प्रवृद्धा अस्ति । लक्ष्यहीनता, व्यामोहः, लोभमोहादयः च मानवसहजाः दोषाः अपि प्रगतेः अवरोधकाः भवन्ति । अतः मानवः मरुभूमिस्थः चम्पकवृक्षः इव जातः अस्ति । 'जीवनपालनम् एव दुस्तरं जातम् इत्यतः प्रगतिः सर्वथा असाध्या' इति यदि कश्चित् चिन्तयति तर्हि किम् आश्चर्यम् अत्र ?

किन्तु विवेकी एतादृश्यां परिस्थितौ अपि उपायेन व्यवहरन् जीवनप्रगतिं साधयति । विशिष्टप्रतिभाशालिनः तावत् प्रगतेः पराकाष्ठां प्राप्तवन्तः स्युः । तेषां विषये चिन्तनम् इदानीम् अप्रकृतम् । सामान्याः बहवः जीवने साफल्यं तृप्तिं च प्राप्तवन्तः दृश्यन्ते । तेषां जीवनं वस्तुतः अध्ययनयोग्यम्, अनुकरणयोग्यं च । युक्तायुक्तविवेकः, ऋजुमार्गाश्रयणम्, प्रीतिपूर्णः व्यवहारः, लोकसेवा, निर्व्यामोहः इत्यादयः केचन गुणाः तान् तादृशान् कुर्वन्ति प्रायः । अतः जीवने साफल्यं प्राप्तव्यं चेत् पूर्वोक्ताः गुणाः यथाशक्ति अनुसरणीयाः । यावान् प्रयत्नः क्रियते तावत् फलं प्राप्यते सर्वैः ।

# JUST RELEASED

The first set of **Chandamama Books**, splendid in their content, illustrations, and production, is now ready.




Rs. 30/-




Rs. 40/-




Rs. 30/-




Rs. 30/-




Rs. 25/-




Rs. 30/-

Discount for members of **Chandamama Young Scholars Club.**

For details, write to :



**CHANDAMAMA BOOKS**
Chandamama Bldgs.
Vadapalani, Madras - 600 026.



# चन्दमामा

अगस्त् - १९९६



## अन्तरङ्गम्


| | |
|---|---|
| सम्पादकीयम् | .... ७ |
| वार्ताविशेषः | .... ९ |
| ग्रामाधिकारी राजीवः | .... १० |
| रूपधरस्य प्रवासः - १२ | .... १७ |
| रसवार्ताः | .... २४ |
| कः दुष्टः ? कः सज्जनः | .... २५ |
| समुद्रतीरप्रयाणम् - ८ | .... ३३ |
| आत्मख्यापनम् | .... ३७ |
| चन्दमामायाः सुवर्णसमयः | .... ४१ |
| महाभारतम् | .... ४५ |
| चन्दमामानुबन्धः - ९२ | .... ५६ |
| पाकपिशाची | .... ५७ |
| वानरेण आनीता सम्पत्तिः | .... ६१ |
| चित्रशीर्षिकास्पर्धा | .... ६५ |





प्रतिकृतिमूल्यं रू. ६-००

वार्षिकं ग्राहकशुल्कं रू. ७२-००




# चन्दमामा

संस्थापकः - 'चक्रपाणिः'    सञ्चालकः - 'नागिरेड्डी'

## आवश्यकी शिक्षणे समानता



अस्माकं देशे शैक्षणिकक्षेत्रे एषः कश्चन महान् विरोधाभासः दृश्यते यत् केषुचित् विद्यालयेषु प्रवेशं प्राप्तुं क्वचित् बालानां पोषकाः महत् कष्टम् अनुभवन्ति चेत् पुनः केषुचित् विद्यालयेषु छात्रसङ्ख्या नितरां क्षीणा भवति, यस्य च कारणतः विद्यालयीयैः अपेक्षितसङ्ख्यायाः पूर्त्यर्थं बालानाम् अन्वेषणं करणीयं भवति । शासननियमः तान् एतस्मिन् कार्ये अनुबध्नाति ।

शासननियमाः वदन्ति - कक्ष्यायां ३२ विद्यार्थिनः वा भवेयुः एव इति । यदि छात्रसङ्ख्या ५०तः अधिका भवति तर्हि तत्र विभागद्वयं भवेत् । यदि नवत्यधिकाः छात्राः स्युः तर्हि विभागत्रयं कल्पनीयं भवति । एवम् एव विभागचतुष्टयादिकम् अपि । कनीयप्राथमिकविद्यालये चत्वारः अध्यापकाः भवन्ति । यदि तत्र छात्राः शतात् न्यूनाः भवन्ति तर्हि सः विद्यालयः हानिकरत्वेन परिगण्यते । तस्य पिधानं चिन्त्यते च । तस्य परिणामतः तत्रत्याः अध्यापकाः उद्योगहीनाः भविष्यन्ति । एतत्सर्वं मनसि आकलयन्तः अध्यापकाः छात्रासङ्ख्यायाः वृद्धिः कथम् इति सदा चिन्ताक्रान्ताः भवन्ति ।

कदाचित् एवं पृच्छ्येत - 'विद्यालयप्रवेशं प्रतीक्षमाणान् छात्रान्, छात्रसङ्ख्याभावग्रस्तान् विद्यालयान् प्रति सम्प्रेषणेन किम् एषा समस्या निवारयितुं न शक्येत' इति । एतस्य उत्तरं पालकानाम् मानसिकताम् अवलम्बते । यतः बहवः पालकाः (दैववशात् न सर्वे !) स्वपुत्रान् आङ्ग्लमाध्यमविद्यालयान् प्रत्येव प्रेषयितुम् इच्छन्ति, ये च विद्यालयाः स्वायत्तसंस्थाभिः सञ्चाल्यन्ते । महानगरेषु तु एषा प्रवृत्तिः महता प्रमाणेन दृश्यते ।

विद्यालयस्वामिनः सर्वकारीयाधिकारिणः च समानशिक्षणप्रणालीं यदा अङ्गीकुर्वन्ति तदा एव एतस्याः समस्यायाः परिहारः प्रायः भवति, तदा एव छात्राः स्वगृहसमीपे स्थिते विद्यालये प्रवेशावकाशं प्राप्तुम् अर्हन्ति च । स्वायत्तसंस्थाः सर्वकारीयविद्यालयाः चापि यदा समानशिक्षणव्यवस्थाम् अङ्गीकुर्वन्ति तदा एव एषा प्रवेशावकाशसमस्या परिहृता भवेत् ।

सम्पुटः - १३    अगस्ट् - १९९६    सञ्चिका - ५
प्रतिकृतिमूल्यं रू. ६.०० * वार्षिकं ग्राहकशुल्कं रू. - ७२.००



# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अनूद्य - Having translated
अपचारः - Improper conduct
अप्रशस्तः - Not commandable
असहायः - Helpless
अस्तव्यस्तम् - Scattered hither and thither
अहितुण्डिकः - Snake charmer
आविष्कारः - Expression
उज्जीवितः - Revived
उत्सहते - Enthusiasm
कपोतः - Pigeon
क्वथितम् - Sambar
खण्डशर्करा - Sugar candy
गर्वशीलः - Haughty
चटकः - Sparrow
चिकित्सालयः - Hospital
जानपदम् - Folk
जृम्भणम् - Yawn
ताक्रम् - Made of butter milk

दिनदर्शिका - Calander
धम्मिल्लः - The top knot of females
निरोद्धुम् - To stop
निर्वीर्यः - Spineless
परावलम्बिता - Dependency
पात्रधारी - Actor
पिशुनः - Back baiter
पूर्वाग्रहः - Prejudiced
मधु - Honey
मितिः - Limitation
रूक्षः - Rough
लक्ष्यीकृत्य - Aiming
विचक्षणता - Perception
विवेचनम् - Descrimination
वैविध्यम् - Veriety
सम्पुटः - Volume
सूपः - Soup
सौजन्यम् - Goodness

* * *

**वार्ताविशेषः -**

# स्पेयिन्देशे अधिकारपरिवर्तनम्

स्पेयिन्देशस्य प्रजाः अधिकारारूढं सोषलिष्ट्-पक्षम् अधिकारच्युतं कृतवत्यः । मार्च्-मासस्य तृतीये दिनाङ्के 'स्पेयिन्देशस्य 'कार्टेस्'नामिकायाः लोकसभायाः निमित्तं निर्वाचनम् प्रवृत्तम् । २५० स्थानवत्याम् एतस्यां सभायाम् पूर्वतनप्रधानमन्त्रिणः फिलिप्-गोनजालेज्वर्यस्य धुरीणत्वेन युक्तेन सोषलिष्ट्पक्षेण १४१ स्थानानि प्राप्तानि । जोस् मेरिया अजार्न् धुरीणत्वेन युक्तेन पाप्युलर्पक्षेण १५६ स्थानानि लब्धानि । अधिकारस्वीकरणार्थं तेन इतोऽपि २० स्थानानि प्राप्तव्यानि आसन् । १६ स्थानानि प्राप्तवता काटन्लान् न्याषनलिष्ट्पक्षेण, ५ स्थानानि प्राप्तवता बास्क् न्याषनलिष्ट्पक्षेण च पापुलर्पक्षाय समर्थनं दत्तम् इति कारणेन पाप्युलर्पक्षः अधिकारसूत्रं स्व्यकरोत् ।

सोषलिष्ट्पक्षस्य विषये जनानां तिरस्कारभावना या आगता तत्र अनेकानि कारणानि सन्ति । तेषु उत्कोचस्वीकरणं प्राधान्येन गण्यते । 'होम्'शाखायाः सचिवः डेथ् स्क्वाडस्-सहकारेण बास्क् न्याषनलिष्ट्-पक्षीयान् कांश्चन कार्यकर्तॄन् मारितवान् आसीत् । तत्कारणतः सः सचिवस्थानात् निष्कासितः आसीत् । अतः काटन् लान् न्याषनलिष्ट्पक्षेण अधिकारारूढस्य पक्षस्य समर्थनं प्रतिस्वीकृतम् । शीघ्रं निर्वाचनानि निर्वर्तनीयानि इत्यपि तेन पक्षेण अनुरोधः कृतः । यद्यपि देशस्य आर्थिकपरिस्थितिः उत्तमा आसीत् तथापि निरुद्योगसमस्या ४०% वर्धिता आसीत् । एतानि सर्वाणि कारणानि अधिकारपक्षस्य विषये प्रजानां मनसि असन्तोषं जनयन्ति स्म ।

द्वितीये जागतिके युद्धे (१९३९-४५) स्पेयिन्देशं सर्वाधिकारी जनरल् फ्राङ्को पालयति स्म । तदा स्पेयिन्देशस्य राजा देशं त्यक्त्वा पलायनं कृतवान् आसीत् । स्वस्य मरणानन्तरं पुनश्च स्पेयिन् राजप्रभुत्वम् आप्नुयात्, राजकुमारः जुवान् कार्लोस् देशस्य उत्तरदायित्वं स्वीकुर्यात् च इति फ्राङ्को प्रकटितवान् आसीत् । २८ वर्षाणाम् अनन्तरं, तन्नाम १९७५ तमे वर्षे, जनरल् फ्राङ्कोवर्यस्य मरणानन्तरं तत् व्यवहारे आगतम् ।

१९७८ तमे वर्षे 'स्पेयिन्'देशस्य नूतन-संविधानं रचितम् अभवत् । 'डेमोक्रटिक्'- पक्षस्य अडोल्फो स्कारेज् प्रधानमन्त्री अभवत् ।

१९८२ तमे वर्षे प्रचलिते निर्वाचने गोन् जालेज् धुरीणत्वेन युक्तस्य सोषलिष्ट्पक्षस्य विजयः अभवत् । सः अधिकारसूत्राणि स्व्यकरोत् च । अनन्तरं प्रचलिते निर्वाचनद्वये तस्य पक्षस्य कीर्तिः क्रमशः ह्रासं गता । चतुर्थवारम् अपि 'अहमेव प्रधानमन्त्री भविष्यामि' इति गोन्जालेज् चिन्तितवान् आसीत् । किन्तु प्रजानां निर्णयः अन्यः एव आसीत् । एतद्विषये स्वस्य अभिप्रायं प्रकटयन् पक्षस्य उपनायकः 'एतादृशं पराजयं वयं कदापि न निरीक्षितवन्तः आस्म' इति उक्तवान् ।





# ग्रामाधिकारी राजीवः

राजीवः गर्वशीलः इति सर्वे चिन्तयन्ति स्म । परन्तु सः अधिकारिभिः सह विनयेन एव व्यवहरति स्म । अतः सः जीवने यशः सम्पादितवान् । कानिचन दिनानि यावत् महाराजस्य आस्थाने उद्योगी आसीत् ।

तस्य देशस्य महाराजः चन्द्रकान्तः लघुविषयम् अधिकृत्य अपि सर्वेषु कुपितः भवति स्म । कदाचित् तस्य मनःस्थितिः सम्यक् न आसीत् । तस्मिन् समये तस्य पुरतः राजीवः आसीत् । तदा सः राजीवं कोपेन उक्तवान् - ''मुखं मा दर्शयतु । इतः दूरं गच्छतु भवान्'' इति ।

एतं विषयं सुधीरः नाम मन्त्री ज्ञातवान् । सः राजीवम् आहूय उक्तवान् - ''भवान् विद्यावान्, बुद्धिमान् च अस्ति । भवति विशेषविवेचनाशक्तिः अस्ति । एवं स्थिते अकृतस्य अपराधस्य निमित्तं किमर्थं दण्डनं प्राप्तव्यं भवता ? यथा महाराजः भवन्तं क्षमां प्रार्थयेत् तथा अहं करोमि । भवान् मया सह आगच्छतु'' इति ।

अनुक्षणं राजीवः उक्तवान् - ''महाराजः कुपितः आसीत्, न तु अहम् । मया एव अपराधः कृतः स्यात् । अतः मया एव क्षमा प्रार्थनीया । तदर्थं उपायं सूचयतु'' इति ।

सुधीरः महाराजस्य समीपं गत्वा - ''प्रभो ! लघुविषये भवान् निरपराधिषु कुपितः भवति । एतत् उचितं न । एतस्मात् कदाचित् निर्दोषिणाम् अपि दुःखं भवति'' इति वदन् राजीवस्य घटनाम् उदाहृतवान् ।

राजा चन्द्रकान्तः क्षणं यावत् मौनं स्थित्वा उक्तवान् - ''अहं राजीवं तर्जितवान् चेदपि सः दुःखम् अप्रकटयन् चिन्तितवान् यत् मया एव क्षमा प्रार्थनीया इति । अतः सः निश्चयेन विनयशीलः । विनयमूर्तये तस्मै उत्तमः पुरस्कारः दातव्यः । अतः तं सिद्धपुरग्रामाधिकारिरूपेण नियोजयिष्यामि'' इति ।

एतावत्पर्यन्तं राजीवः उन्नताधिकारिणां मन्त्रिणां, महाराजस्य च वचनानुसारं कार्यं कुर्वन् आसीत् । तादृशः राजीवः इदानीं ग्रामाधिकारिस्थानं प्राप्तवान् आसीत् । एतादृशकार्यं तस्य जीवने नूतनम् आसीत् । ग्रामे उन्नताधिकारी अन्यः कोऽपि न आसीत् ।

ग्रामरक्षणे राजीवस्य साहायकः माधवः आसीत् । सः बुद्धिमान् निःस्वार्थी च आसीत् । माधवस्य अभिप्रायानुसारं व्यवहरन् कानिचन दिनानि यावत् विना क्लेशं कार्यं निरूढवान् ।

एकदा ग्रामप्रमुखाः सर्वे राजीवम् एककण्ठेन उक्तवन्तः - "यावत् माधवस्य साहाय्यं भवति तावत् भवतः कष्टं नास्ति" इति ।

माधवस्य प्रशंसायाः श्रवणात् राजीवस्य दुःखं जातम् । अनन्तरदिने सः माधवम् आहूय - "अस्मिन् ग्रामे परिस्थितिः उत्तमा अस्ति । एतत् मम सामर्थ्यबलात् सिद्धम् उत भवतः सामर्थ्यबलात् ?" इति पृष्टवान् ।

तदा माधवः हसन् उक्तवान् - "पूर्वं यः ग्रामाधिकारी आसीत् तस्मै अपि अभिप्रायं ददामि स्म । अभिप्रायस्य युक्तायुक्ततां ज्ञातुं ग्रामाधिकारिणः शक्तिः आवश्यकी । ग्रामः ग्रामाधिकारिणः हृदयम् इव । ग्रामस्य उन्नतिः अवनतिः च ग्रामाधिकारिणम् अवलम्बते । कस्य अभिप्रायं पुरस्कृत्य तेन कार्यं क्रियते इति तु गौणं भवति । अतः अत्र भवतः सामर्थ्यम् एव कारणम्" इति ।



माधवस्य उत्तरेण राजीवस्य तृप्तिः न जाता । 'मम अभिप्रायस्य पुरस्कारात् एव ग्रामाधिकारिणः सामर्थ्यम् इति माधवः वदति' इति विचिन्त्य सः निर्णीतवान् यत् परिस्थितेः परिवर्तनं करणीयम् इति । तदर्थं सः ग्रामे सवत्र अन्विष्य शकुनिनामकं कञ्चित् प्राप्तवान्, यश्च माधवं न इच्छति स्म ।

ततः राजीवः माधवम् उक्तवान् - "एकस्य अभिप्रायस्य श्रवणात् विषयस्य युक्तायुक्तता न ज्ञायते । अतः इतः परं शकुनेः अभिप्रायः अपि स्वीकरणीयः इति निश्चितम् अस्ति मया" इति ।

"भवति यावत् समयस्फूर्तिः भवति तावत् सर्वेषाम् अपि अभिप्रायाः उत्तमाः एव भवन्ति" इति माधवः उक्तवान् ।

तस्मात् दिनात् राजीवः सर्वेषु विषयेषु



शकुनेः एव अभिप्रायं स्वीकर्तुम् उद्युक्तः अभवत् । शकुनिः बुद्धिमान्, परन्तु तस्य अधिकारव्यामोहः अधिकः आसीत् । ग्रामाधिकारिणः सहायकत्वं नाम उन्नतं स्थानम् इति चिन्तयित्वा सः निश्चितवान् यत् ममापि ग्रामाधिकारिणः कार्यालये किञ्चित् स्थानम् आवश्यकम् इति । अतः सः माधवम् आहूय - "ग्रामाधिकारिणः कार्यालये उद्योगं कुर्वतः भवतः पृथक् प्रकोष्ठः नास्ति यत् तत् कथं शोभते ? भवान् यथा तथा अहम् अपि ग्रामाधिकारिणः सहायकः एव । अतः आवयोः निमित्तं प्रकोष्ठः व्यवस्थापनीयः इति राजीववर्यं सूचयिष्यामि" इति उक्तवान् ।

"किम् अभिप्रायदानं किञ्चन महत् कार्यम् ? अभिप्रायदात्रे पृथक् प्रकोष्ठः किमर्थम् ? एतादृशं विचारं परित्यजतु भवान्" इति माधवः शकुनिम् उक्तवान् ।

तस्मिन् दिने सायङ्काले शकुनिः राजीवस्य समीपं गत्वा - "अभिप्रायदानं नाम महत् कार्यम् इति चिन्तयित्वा भवत्समीपे आधिक्येन स्थातुम् इच्छन् अहं भवतः भवने एकं प्रकोष्ठम् इष्टवान् । परन्तु अभिप्रायदानम् अपि महत् कार्यं वा ?" इति उपहासपूर्वकं वदन् माधवः मम प्रार्थनां तिरस्कृतवान्" इति वदन् माधवस्य उपरि दोषम् आरोपितवान् । "एवं वा ? अहं सर्वदा भवतः अभिप्रायं प्राप्नोमि इत्यतः सः भवते असूयति इति भाति । तथापि अलं चिन्तया । भवद्भ्याम् एकैकं प्रकोष्ठं मम भवने निर्माय दास्यामि । किन्तु सर्वदा भवतः अभिप्रायम् एव पुरस्करिष्यामि" इति उक्तवान् राजीवः ।

"यः मह्यं प्रकोष्ठकल्पनं निराकृतवान् तस्मै अपि भवता किमर्थं प्रकोष्ठः प्रकल्प्यते ?" इति पृष्टवान् शकुनिः ।

तदा राजीवः उक्तवान् - "जनानां दृष्ट्या अहं पूर्वाग्रहपीडितः न भवेयं किल । अतः उभयोः कृते अपि प्रकोष्ठः कल्प्यते" इति ।

तदा आरभ्य शकुनिः गर्वेण राजीवं बोधयति स्म - "ग्रामाधिकारी नाम महाराजः इव । अतः तेन गाम्भीर्येण भवितव्यम् । सः सर्वैः सह हसन् सम्भाषणं न कुर्यात् । कोऽपि नमस्कारं करोति चेत् तेन प्रतिनमस्कारः न करणीयः । एवं व्यवहारः एव ग्रामाधिकारिणः शोभायै ।

एतदृशीः सर्वविधसूक्ष्मताः ज्ञात्वा व्यवहरति चेत् भवान् यशस्वी अधिकारी भविष्यति'' इति ।

गर्विताय राजीवाय शकुनेः अभिप्रायाः नितराम् अरोचन्त । सः अनुक्षणमेव तान् अभिप्रायान् अनुसृतवान् ।

तथापि कोऽपि राजीवं प्रतिवचनं न उक्तवान् । अतः राजीवः इतोऽपि कोपेन व्यवहर्तुम् उद्युक्तः अभवत् । महाराजस्य प्रियः राजीवः इति ज्ञातवन्तः जनाः अपि तस्मात् भीताः अभवन् । परन्तु माधवः एकः एव अन्येभ्यः भिन्नः अभवत् । राजीवः प्रतिनमस्कारम् अपि न करोति इति ज्ञातवान् सः अपि नमस्कारं न करोति स्म । राजीवः अभिप्रायान् पृच्छति चेदेव सः स्वस्य अभिप्रायान् वदति स्म ।

एतादृशं व्यवहारं दीर्घकालम् अनुवर्तयितुम् अनिच्छन् माधवः कदाचित् राजीवम् उक्तवान् - ''मम अपराधः कः इति वदतु । मयि वृथा दोषारोपः न करणीयः भवता । यदि भवान् तथा करोति तर्हि अहं महाराजं सर्वं वदिष्यामि'' इति ।

महाराजस्य नाम्नः प्रस्तावात् राजीवः किञ्चिदिव भीतः । अतः सः माधवं पृष्टवान् - ''भवान् किम् इति महाराजं वदति ?'' इति ।

एतस्य उत्तररूपेण माधवः यावत् किमपि वक्तुम् उद्युक्तः तावता राजीवः कोपं प्रकटयन् - ''अलम् असम्बद्धप्रलपनेन । ज्येष्ठाधिकारिणि मयि एव अनादरं प्रकटयतः भवतः योग्यता मया ज्ञाता ।



किम् अल्पयोग्यतावता भवता सह वार्तालापं कर्तुम् अहं न इच्छामि'' इति उक्तवान् ।

''वस्तुतः भवता सह वार्तालापः ममापि मोददायकः न । युक्तायुक्ततानिर्णयः येन क्रियते तेन सह वार्तालापः शोभते । प्रियकारिणां पिशुनानां वचने यस्य आदरः, तेन सह वार्तालापः मह्यम् अपि न रोचते । ममापि अभिमानः अस्ति । ममापि मदीयं विशिष्टं व्यक्तित्वम् अस्ति । भवतः प्रीतिसम्पादनार्थं मया किमपि करणीयं तु नास्ति । यथा भवान् तथा अहम् अपि राज्ञा नियुक्तः अस्मि इत्यतः कार्यालयकार्यं तु विनालोपं करिष्यामि एव । किन्तु यावत् भवान् न इच्छति तावत् भवता सह वार्तालापम् अहम् अपि न करिष्यामि'' इति उक्तवान् राजीवः ।



तदा आरभ्य माधवः राजीवेन सह सम्भाषणं न कृतवान् । अतः राजीवः कुपितः अभवत् । अग्रे किं करणीयम् इति न जानाति स्म सः । अतः एतद्विषये सः शकुनेः अभिप्रायं पृष्टवान् ।

''ग्रामजनानां सर्वा गणना माधवस्य समीपे अस्ति । 'तत्र विद्यमानान् कांश्चन् संशयान् निवारयतु' इति तं सूचयतु भवान् । तदा सः एव स्वयम् आगत्य सम्भाषणं करिष्यति'' इति राजीवम् उक्तवान् शकुनिः ।

'परन्तु सूचनादानादिनिमित्तम् अहम् एव प्रथमं तेन सह सम्भाषणं करोमि चेत् उचितं न भवति किल'' इति उक्तवान् राजीवः ।

तदा शकुनिः उक्तवान् - ''भवान् भटानां द्वारा तस्मै सूचनां प्रेषयतु'' इति ।

राजीवः भटानां द्वारा माधवाय सन्देशं प्रेषितवान् । परन्तु माधवः तेषां द्वारा एव सन्देहान् सूचयतु इति राजीवाय सन्देशं प्रेषितवान् ।

''एषः माधवः अतीव गर्वितः'' इति शकुनिम् उक्तवान् राजीवः ।

''भवान् सौजन्येन व्यवहरति यत् तस्य परिणामः एषः । सकृत् भवान् अधिकारबलं दर्शयतु । तदा सर्वं सम्यक् भविष्यति'' इति शकुनिः उक्तवान् ।

तदा आरभ्य माधवस्य कष्टानि आरब्धानि । तस्य क्षेत्रस्य, गृहस्य च करः अधिकः जातः । तस्य क्षेत्रे जलस्य अपि अभावः जातः । एवं स्थिते अपि माधवः एतत् सर्वं सहमानः मौनं स्थितवान् ।

केषाञ्चित् दिनानाम् अनन्तरं माधवस्य पुत्र्याः विवाहः निश्चितः । सः सर्वान् ग्रामस्थान् विवाहार्थम् आहूतवान् । किन्तु राजीवं तु न आहूतवान् । एतत् अपमानकरम् भावितवान् राजीवः - ''माधवस्य उपरि यं कमपि दोषम् आरोप्य सः कारागृहं प्रति प्रेषणीयः'' इति चिन्तयन् तदर्थम् एकं कुतन्त्रम् आरचितवान् ।

माधवः भटानां द्वारा एतां वार्तां ज्ञातवान् । महाराजस्य प्रमुखसहायकः सुधीरः माधवस्य बन्धुः आसीत् । अतः माधवः झटिति राजधानीं गत्वा सर्वं वृत्तान्तं सुधीरं निवेदितवान् ।

सर्वं श्रुतवान् सुधीरः - ''किम् एतत् ? कूपमण्डूकः इव स्थितः राजीवः भवतां ग्रामे क्रूरः जन्तुः अभवत् वा ? अत्र मम वचनानुसारम् एव कार्यं कुर्वन् आसीत्

सः । अहम् एव तदीयान् उत्तमगुणान् महाराजम् उक्त्वा तस्मै ग्रामाधिकारिपदवीं दापितवान् । तादृशः अस्माकं विरोधी अभवत् वा ? अहम् इच्छामि चेत् तं दिनाभ्यन्तरे उद्योगतः एव उच्चाटयितुं शक्नोमि'' इति कोपेन उक्तवान् ।

तदा माधवः - ''एवं करणं समस्यायाः शाश्वतपरिहारः न । तस्य गर्वं निवारयितुम् अस्माभिः उपायः चिन्तनीयः'' सुधीरम् उक्तवान् ।

सुधीरः अङ्गीकारपूर्वकं शिरः चालयन् - ''महाराजः चन्द्रकान्तः केभ्यश्चित् दिनेभ्यः अस्वस्थः अस्ति । अतः इदानीं राज्यव्यवहारं समग्रं महाराजस्य पुत्रः देवेन्द्रः एव पश्यति । देवेन्द्रः समर्थः, बुद्धिमान्, विनयशीलः च । पित्रा कृतैः अपराधैः सः दुःखम् अनुभवन् अस्ति । भवतः समस्यायाः परिहारं सः एव सूचयितुम् अर्हति । अतः आवाम् तस्य समीपं गच्छाव'' इति माधवम् उक्तवान् ।

अनन्तरं सुधीरः माधवं युवराजस्य समीपं नीतवान् । युवराजं सर्वं वृत्तान्तं निवेदितवान् च । सर्वं श्रुत्वा युवराजः उक्तवान् - ''एतत् सर्वं मम पितुः कारणतः एव प्रवृत्तम् । मम पिता अपि गर्वशीलः अस्ति । अतः सर्वेऽपि तस्य गुणम् अनुसरन्ति । एतत् निवारयितुं कश्चन उपायः अस्ति । अहं भवतः ग्रामम् आगमिष्यामि । कदाचित् मम पिता राजीवं तर्जितवान् आसीत् इति भवान् स्मरेत् खलु । तदर्थम् अहम् इदानीं राजीवस्य क्षमां प्रार्थयामि''



इति ।

'परन्तु भवान् क्षमां संस्कृतभाषया प्रार्थयतु । अहं तद् अनूद्य राजीवं वदिष्यामि । यतः सः संस्कृतं न जानाति'' इति माधवः युवराजम् उक्तवान् ।

माधवस्य आन्तर्यं ज्ञातवान् युवराजः हसितवान् । अनन्तरं युवराजः, माधवः, सुधीरः च सिद्धपुरग्रामम् आगताः ।

तान् त्रीन् अपि दृष्ट्वा राजीवः सम्भ्रान्तः । परन्तु यदा देवेन्द्रस्य आगमनोद्देशः ज्ञातः तदा तस्य धैर्यम् आगतम् । तावदेव न, मां क्षमां प्रार्थयितुं युवराजः स्वयम् आगतवान् इत्यतः अहं श्रेष्ठः इति चिन्तयन् गर्वभावम् अनुभूतवान् सः ।

ग्रामाधिकारिणः भवने युवराजः, सुधीरः, राजीवः, शकुनिः, माधवः, अन्ये

केचन ग्रामप्रमुखाः च सम्मिलिताः ।

सर्वेषां सम्मुखे देवेन्द्रः उक्तवान् - ''मम पितुः कारणतः जातान् अपराधान् मम व्यवहारेण अहं समीकर्तुम् इच्छामि । अतः अहं राजीवं क्षमां प्रार्थयामि । गुरुकुले अहं सर्वाः विद्याः संस्कृतेन एव ज्ञातवान् । अतः अहं संस्कृतभाषया एव क्षमां प्रार्थयामि । तत् अनूद्य माधवः राजीवं वदति'' इति ।

तदा शकुनिः राजीवं रहसि उक्तवान् - ''युवराजः अतीव चतुरः अस्ति । इदानीं माधवः भवता सह सम्भाषणं करोति एव'' इति ।

अनन्तरं देवेन्द्रः संस्कृतेन सम्भाषणं कृतवान् । तस्य भावं माधवः अभिनयेन राजीवं सूचितवान् ।

परन्तु राजीवः तत् ज्ञातुम् अशक्तः सन् - ''प्रभो ! माधवस्य गर्वं पश्यतु । भवता सह सम्भाषणं न करिष्यामि इति भावम् अभिनयेन मां सूचयन् अस्ति सः । भवतः पुरतः कः एषः उद्धतव्यवहारः एतस्य ?'' इति युवराजम् उक्तवान् ।

तदा देवेन्द्रः शिरः चालयन् राजीवम् उक्तवान् - ''गर्वस्य आत्मगौरवस्य च मध्ये महान् भेदः अस्ति । यः सम्भाषणं मा करोतु इति वदति तेन सह सम्भाषणस्य अकरणम् आत्मगौरवं द्योतयति । देशस्य युवराजः सन् अहम् एव सर्वेषां दोषाणां निमित्तं क्षमां प्रार्थयन् उत्तमव्यवहारं प्रदर्शितवान् । भवान् माधवेन सह सम्भाषणं कर्तुं न इष्टवान् । एषः भवतः दोषः । मम व्यवहारस्य दर्शनस्य अनन्तरम् अपि भवान् आत्मना कृतस्य दोषस्य निमित्तं क्षमां न प्रार्थितवान् । एतत् भवतः गर्वस्य आधिक्यं सूचयति'' इति ।

युवराजस्य एतैः वचनैः राजीवः लज्जितः सन् शिरः अवनमय्य - ''मम अपराधं क्षाम्यतु कृपया'' इति माधवं प्रार्थितवान् ।

तदा माधवः हसन् - ''भवता स्वदोषः ज्ञातः चेत् मम क्षमा प्राप्ता इव । समस्यायाः परिहारः अपि अत्रैव अस्ति'' इति राजीवम् उक्तवान् ।

एतादृशव्यवहारसूक्ष्मतां ज्ञातवान् राजीवः गर्वं परित्यक्तवान् ।






# १२

[परदेशेषु नानाविधानि कष्टानि अनुभूय रूपधरः महता परिश्रमेण स्वदेशं यदा प्राप्तवान् तदा तस्य पुत्रः धीरमतिः पितुः स्थितिं ज्ञातुं प्रयत्नम् आरब्धवान् आसीत् । रूपधरस्य पत्नीं परिणेतुम् इच्छन्तः बहवः राजकुमाराः रूपधरगृहं प्रविश्य स्वेच्छया व्यवहरन्तः सम्पत्तिं लुण्ठयन्तः आसन् । तेषाम् एषा प्रवृत्तिः धीरमतये न अरोचत । एतद्विषये सः एकां सभाम् आयोज्य तत्र स्वकष्टं निवेदितवान् । किन्तु तेन किमपि प्रयोजनं न सिद्धम् । अतः धीरमतिः पितुः वार्तां ज्ञातुम् इच्छन् नौकाम् आरुह्य इथाकातः पैलास्नगरं प्रति प्रस्थितवान् । तदनन्तरम् ....]

यावत् नौका पैलास्तीरं प्राप्तवती तावता रात्रिः समाप्ता आसीत् । समुद्रतीरे वरुणाय कृष्णवर्णीयं वृषभं बलिरूपेण अर्पयितुं जनाः सम्मिलिताः आसन् । तीरे तत्र तत्र पाकार्थं सज्जीकृताः चुल्लयः दृश्यन्ते स्म । नाविकाः नौकां स्थगयित्वा तीरसमीपं यदा नीतवन्तः तदा धीरमतिः वृद्धः सहनश्च नौकातः अवतीर्णवन्तौ ।

तत्र सम्मिलितान् जनान् पश्यन्तौ तौ अग्रे गतवन्तौ । एवं गमनसमये सहनः धीरमतिम् उक्तवान् - ''आवाम् अचिरात् एव नवद्योतं द्रक्ष्यावः । तस्य सम्मुखे भवान् सर्वम् अपि निस्सङ्कोचं वदतु । सः भवतः पितुः समवयस्कः । भवतः पित्रा सह जीवन् युद्धानि च कुर्वन् अनेकविधानि कष्टसुखादीनि सम्मुखीकृतवान् अस्ति सः । सः सामान्यदर्शनेन सात्त्विकः इव भासते चेदपि रणरङ्गे अतिरथमहारथान् अपि लीलया जेतुं समर्थः । असत्यं नाम्ना अपि न जानाति सः । यथा वयसा तथा

व्यवहारेण ज्ञानेन चापि ज्येष्ठः सः । अतः तस्य पुरतः सर्वस्य कथनं युक्तम् एव भवति'' इति ।

''आर्य ! अहं तु बालः । ज्येष्ठैः सह कथं व्यवहरणीयम् इति सम्यक् न जानामि । बाल्यात् अपि आधिक्येन अहम् एकान्तजीवनम् एव यापितवान् । मित्रैः सह क्रीडनादिकं मम न आसीत् । एवं स्थिते ज्येष्ठैः सह व्यवहारः मादृशानां क्लेशाय एव खलु ? अतः महती भीतिः मां बाधते '' इति उक्तवान् धीरमतिः ।

किन्तु सहनः धीरमतिं धैर्यवचनानि वदन्, तस्मिन् उत्साहं च पूरयन् तत् शिबिरं गतवान्, यत्र च नलद्योतः तत्कुमाराः च वसन्ति स्म ।

अदृष्टपूर्वयोः उभयोः आगमनं दृष्ट्वा आश्चर्यं कुतूहलं च अनुभवन्तः नवद्योतः तत्कुमाराश्च धीरमतिं सहनं च आदरेण स्वागतीकृतवन्तः । ततः नवद्योतस्य पार्श्वे प्रसारिते आसने तौ उपवेशितौ । आहारस्य द्राक्षारसादीनां च दानेन ते तौ सत्कृतवन्तः ।

तौ यदा आतृप्ति भोजनं कृतवन्तौ तदा नवद्योतः तौ पश्यन् पृष्टवान् - ''आर्यौ ! कौ भवन्तौ ? कस्मात् देशात् आगमनं भवतोः ? केन उद्देशेन भवन्तौ अत्र आगतवन्तौ । एतद्देशं लक्ष्यीकृत्य एव भवन्तौ आगतवन्तौ उत आकस्मिकतया अत्र आगतवन्तौ ?'' इति ।

तदा धीरमतिः दैर्येण उक्तवान् - ''महाराज ! आवाम् इथाकावासिनौ । अहं स्वकार्यस्य निमित्तम् अत्र आगतवान् अस्मि । रणरङ्गे भवता सह युद्धं कृतवतः मम पितुः वार्तां ज्ञातुम् अहम् अत्र आगतवान् अस्मि । युद्धार्थं गतानां सर्वेषां वार्ता अस्माभिः ज्ञाता । किन्तु मम पितुः वार्ता तु कुतश्चित् अपि न ज्ञाता । सः



जीवति वा न वा इत्यपि वयं न जानीमः । रणरङ्गे भवान् अपि तेन सह आसीत् इत्यतः भवतः मुखात् कापि वार्ता ज्ञायेत इति मत्वा अहम् अत्र आगतवान् अस्मि । अतः मम पितुः विषये भवान् यावत् जानाति तावत् प्रियाप्रियताम् अविचिन्त्य वदतु कृपया'' इति ।

एतत् श्रुत्वा नवद्योतः उक्तवान् - ''वत्स । भवतः प्रश्नात् प्राचीनाः घटनाः सर्वाः मम स्मृतिपटलम् आयान्ति । वज्रकायस्य नेतृत्वे वयं सर्वे नौकया गत्वा ट्रोयनगरस्य उपरि आक्रमणं कृतवन्तः । ततः घोरं युद्धं प्रवृत्तम् । तच्च नव वर्षाणि यावत् अनुवृत्तम् अभवत् । अस्मत्पक्षीयाः बहवः योधाः रणाङ्गणे प्राणान् समर्प्य वीरस्वर्गं प्राप्तवन्तः । ज्ञानेन, शौर्येण, व्यवहारचातुर्येण च भवत्पितृसमः अन्यः सर्वथा नास्ति लोके । भवत्पितृसमं रणधीरं वाक्चतुरं च अहं मम जीवने कदापि न दृष्टवान् । भवतः पितुः व्यूहरचनाकौशलं शासननिर्वहणचातुर्यं च असदृशम् एव । सः दैवांशसम्भूतः इति परिगणनम् एव उचितं स्यात् । आवयोः मध्ये कदापि भिन्नाभिप्रायः न उत्पन्नः एव । आवयोः चिन्तनं सदा समानं भवति स्म प्रायः । एवं स्थिते अपि, किं करवाम, प्रतिप्रयाणसमये आवयोः मध्ये विवादः उत्पन्नः। ततः राज्ञः प्रतापस्य च मध्ये तीव्रः भिन्नाभिप्रायः उत्पन्नः । वचनप्रतिवचनादिना तयोः कलहः प्रवृद्धः । ततः योधेषु गणद्वयं जातम् । एकः गणः अग्रजम्, अन्यः गणः अनुजं च अन्वसरत् । अहं प्रतापपक्षम् अनुसृतवान् । वयं प्रतापेन सह ततः प्रस्थिताः । राज्ञः समर्थकाः सर्वे तत्रैव स्थितवन्तः । यदा वयं टेनेडोस् प्राप्तवन्तः तदा भवतः पिता उक्तवान् यत् अहं





प्रतिगच्छामि इति । यदा सः ततः प्रस्थितः तदा केचन तम् अनुसृतवन्तः । ततः अहं, देवमयः, अन्ये केचन जनाः च स्वगृहं प्राप्तवन्तः । तदनन्तरं भवतः पितुः वार्ता मया न श्रुता । वज्रकायस्य पुत्रः नवयोधः तदनुचराः च सकुशलं जन्मभूमिं प्राप्तवन्तः इति वार्ता मया श्रुता । अन्येषाम् अपि केषाञ्चित् वीराणां प्रत्यागमनवार्ता मया श्रुता एव । राराजस्य प्रत्यागमनं, अजबलेन राजपत्न्या सह सम्मेल्य कृतं दारुणं राराजहननं च भवान् अपि श्रुतवान् स्यात् एव । राराजपुत्रः धीरः । समयं संसाध्य अजबलं संहरन् सः प्रतीकारं साधितवान् । पितुः योग्यः पुत्रः सः । ....''

''पुण्यवान् सः । धन्यः सः । यतः प्रतीकारं साधयितुं शक्तवान् अस्ति सः । अहं तु मम मातरं परिणेतुम् इच्छद्भिः दुष्टैः राजकुमारैः क्रियमाणं लुण्ठनं पश्यन् अपि असहायकतया मौनेन तिष्ठामि । न जाने, प्रतीकारसाधनार्थं मया अवकाशः प्राप्येत वा न वा इति'' इति सविषादम् उक्तवान् धीरमतिः ।

''भवतः गृहं प्रविश्य केचन दुष्टाः स्वच्छन्दतया व्यवहरन्तः सन्ति इति वार्ता मया अपि श्रुता अस्ति । भवतः पितुः अनुपस्थित्या ते मदोन्मत्ताः जाताः सन्ति । किन्तु दुष्टाः कदाचित् वा स्वकृत्यानुगुणं फलं प्राप्नुयुः एव । सर्वसाक्षी भगवान् तान् दण्डयेत् एव । तेषां पीडां भवान् कथं सहमानः अस्ति इति अहं न जानामि । दुर्बले क्षणे शत्रवः विजृम्भन्ते । तथापि बुद्धिमतीदेव्याः अनुग्रहः यदि भवति स्यात् तर्हि भवान् अपि पिता इव सर्वान् शत्रून् उन्मूलयेत्'' इति उक्तवान् नवद्योतः ।

एवं वार्तालापः अनुवृत्तः । अत्रान्तरे सूर्यः अस्तं गतः । धीरमतिः स्वनौकां प्रति गन्तुम् उद्युक्तः । किन्तु नवद्योतः एतत् न अङ्गीकृतवान् ।

''रूपधरस्य पुत्रः रात्रिं नौकायां शयानः किं यापयेत् ? किम् अत्र गृहं नास्ति ? किं मम गृहे शय्योपधानादीनि न सन्ति ?'' इति वदन् धीरमतिं स्वगृहं प्रति नीतवान् ।

सहनः तु नाविकादीनां योगक्षेमं द्रष्टुम् इच्छन् नौकासमीपं गतवान् ।

रात्रौ सुखेन शयनं कृतवान् धीरमतिः प्रातः उत्थाय स्नानादिकं समाप्य नूतनवस्त्राणि धृत्वा सिद्धः अभवत् । प्रयाणसमये अपेक्षितं पाथेयं स्वीकृत्य

नवद्योतस्य कश्चन पुत्रः धीरमतिम् अनुसृतवान् । नवद्योतपुत्रः धीरमतिः च दिनद्वयस्य प्रयाणस्य अनन्तरं तं प्रदेशं प्राप्तवन्तौ, यत्र प्रतापः निवसति स्म ।

यदा तौ प्रतापसमीपं गतवन्तौ तदा प्रतापः स्वपुत्रीं वज्रकायस्य पुत्राय दत्त्वा विवाहं निर्वर्तयन् आसीत् । विवाहस्य निमित्तं समीपस्थेभ्यः प्रदेशेभ्यः बहवः आगताः आसन् । विशाले प्राङ्गणे भोजन-विनोदानां निमित्तं व्यवस्था कृता आसीत् ।

अत्रान्तरे प्रतापस्य अङ्गरक्षकः कश्चन आगत्य - "महाराज ! कौचित् अपरिचितौ युवकौ आगतौ स्तः । तौ अन्तः आनयानि, उत अन्यत्र प्रेषयानि ?" इति पृष्टवान् ।

तदा प्रतापः असन्तोषेण - "अये ! किमेतत् अनुचितं चिन्तनं भवतः ? यदा वयम् अदृष्टपूर्वं देशं गतवन्तः तदा कतिवारम् अन्येषाम् आतिथ्यं न प्राप्तवन्तः ? अतः झटिति गत्वा तौ आदरेण भोजनार्थम् आनयतु" इति उक्तवान् ।

ततः अचिरात् एव आगतौ धीरमति-तत्सहचरौ आश्चर्येण परितः दृष्टवन्तौ ।

भोजनार्थं सम्मिलिताः जनाः अपि तौ महता आश्चर्येण दृष्टवन्तः । यतः तौ उदितौ सूर्यचन्द्रौ इव दृश्येते स्म । प्रतापस्य सूचनायाः अनुगुणम् अधिकारिणः तौ आदरेण नीत्वा स्नानादीनां निमित्तं व्यवस्थां कृतवन्तः । ततः प्रतापस्य पार्श्वे एव भोजनार्थं तयोः उपवेशनव्यवस्था कृता ।

प्रतापः तौ उद्दिश्य उक्तवान् - "वत्सौ ! 



भवन्तौ सामान्यौ न इति अहं चिन्तयामि । दर्शनात् तु भासते यत् भवन्तौ राजकुमारौ एव स्याताम् इति । मुखे दृश्यमानं तेजः, व्यवहारगाम्भीर्यम्, उन्नतौ स्कन्धौ, आजानुबाहू इत्यादीनि लक्षणानि भवतोः राजवंशोत्पत्तिं द्योतयन्ति । भवतोः आगमनं मम सौभाग्यात् एव जातम् इति अहं भावयामि । एतत् भवतां गृहम् इव । एते सर्वे भवतां बान्धवाः । अतः निस्सङ्कोचं व्यवहरन्तु भवन्तः । भवतोः आगमनोद्देशं ज्ञातुम् अस्ति एव मम महत् कुतूहलं, तथापि प्रथमं भोजनं करवाम । ततः विस्तरेण वार्तालापः भवतु" इति ।

ततः उभौ अपि भोजनं कृतवन्तौ । भोजनानन्तरं धीरमतिः नवद्योतपुत्रं मन्दस्वरेण उक्तवान् - "मित्र ! अत्र कियन्ति कांस्य-रजत-सुवर्णमयानि वस्तूनि

सन्ति !! दन्तनिर्मितानि वस्तूनि अपि असङ्ख्यानि दृश्यन्ते !!'' इति ।

यद्यपि धीरमतिना मन्दस्वरेण उक्तं तथापि तद्वचनं प्रतापेन श्रुतम् एव । अतः सः उक्तवान् - ''वत्सौ ! मया एतानि विविधदेशेभ्यः शौर्यबलात् सम्पादितानि । मम बुद्धिमत्तायाः शौर्यस्य च द्योतकानि एतानि । मानवेषु शौर्यं बुद्धिमत्ता च सदा स्यात् एव । तदा एव तस्य सार्थकता सिद्ध्यति । एतां सम्पत्तिं प्राप्य अहं सन्तोषम् अनुभवामि इत्येतत् सत्यम् एव । तथापि ये मम अनुचराः ट्रोय्युद्धादिषु स्वप्राणान् हसन्तः समर्पितवन्तः ते यदि इदानीं सजीवं स्युः तर्हि एतां सम्पत्तिं विना अपि दशगुणितं सन्तोषं प्राप्तवान् स्याम् । तदा तदा रोदिति मम मनः । तत्रापि रूपधरं स्मरत् मम मनः सदा खिद्यते । कदाचित् रात्रौ तस्य स्मरणं प्राप्नोमि चेत् निद्राम् एव न प्राप्नोमि । मम एव एषा स्थितिः चेत् रूपधरस्य मातापितृणां, पत्नी-पुत्रादीनां च का वा अवस्था स्यात् ! प्रायः ते प्रतिदिनम् अश्रुधारां वाहयन्तः स्युः'' इति ।

रूपधरस्य प्रस्तावस्य श्रवणात् उद्गतं दुःखं निरोद्धुं सर्वथा न शक्तवान् धीरमतिः । आत्मानं कष्टेन निगृह्य यावत् सः अश्रूणि मार्जयन् आसीत् तावता भुवनसुन्दरी तत्र आगतवती ।

धीरमतिं निर्निमेषं पश्यन्ती सा - ''एषः कः इति तु अहं न जाने । तथापि एतत् तु सत्यं यत् एषः रूपधरस्य प्रतिकृतिः इव अस्ति'' इति उक्तवती ।

''आं प्रिये'' इति उक्तवान् प्रतापः धीरमतिं पश्यन् ।

तदा धीरमतिना सह आगतः नवद्योतपुत्रः प्रतापम् उद्दिश्य - ''महाराज ! भवतोः ऊहा युक्ता एव । एषः रूपधरस्य



पुत्रः एव । रूपधरस्य उपस्थितेः अभावात् एतस्य गृहं शुनकानाम् आवासः इव जातम् अस्ति । कष्टे पतितः एषः इदानीं साहाय्यम् अपेक्षते । भवान् साहाय्यं कुर्यात् कदाचित् इति मम पितुः नवद्योतस्य आशयः । अतः एव सः आवाम् अत्र प्रेषितवान् अस्ति'' इति उक्तवान् ।

''रूपधरपुत्रस्य अत्र आगमनम् अस्माकं सौभाग्याय'' इति उक्तवान् प्रतापः ।

अनन्तरं ते रूपधरम् अधिकृत्य बहुधा वार्तालापं कृतवन्तः । रूपधरः कशाघातं प्राप्तवान् इव अभिनयन् ग्रीक्शिबिरात् निर्गत्य ट्रोय्नगरं प्रविष्टवान् यत्, वेषान्तरं धृतवान् अपि सः आत्मना अभिज्ञातः यत् तत्सर्वं विस्तरेण श्रावितवती भुवनसुन्दरी ।

यदा सर्वे काष्ठाश्वे उपविष्टवन्तः आसन् तदा भुवनसुन्दरी एकैकम् अपि नामकथनपूर्वकम् आहूतवती आसीत् । तदा केचन ततः बहिः गन्तुम् उद्युक्ताः आसन् । एतत् दृष्ट्वा रूपधरः तान् कठोरतया निन्दितवान् आसीत् । एतत्सर्वं विस्तरेण उक्तवान् प्रतापः ।

सर्वं श्रुत्वा धीरमतिः उक्तवान् - ''महाराज ! यस्य गुणशतं भवन्तः वर्णयन्तः सन्ति तस्य अनुपस्थित्या अहं महत् दुःखम् अनुभवन् अस्मि । तस्य अनुपस्थितेः कारणतः बहूनि कष्टानि अनुभूतानि, अनुभूयमानानि सन्ति अपि । गृहे अहम् अहोरात्रं कष्टम् अनुभवन् अस्मि । अतः एव प्रतिक्षणं पितरं स्मरन् भवामि । मम पितुः वार्ता भवता ज्ञाता स्यात् इति विचिन्त्य अहम् अत्र आगतः । अतः प्रार्थये यत् मम पितुः विषये भवान् यत् जानाति तत् वदतु इति । पितृवार्ताश्रावणेन माम् अनुगृह्णातु कृपया'' इति ।

''मया यत् ज्ञायते तत् अहं वदामि, शृणोतु । यदा अहम् ईजिप्ट्देशे आसं तदा समुद्रप्रयाणरतं कञ्चन वृद्धं दृष्टवान् आसम् । सः विविधवीराणां कथां श्रावयन् वार्तालापमध्ये उक्तवान् आसीत् यत् रूपधरः सर्वैः अनुचरैः वियुक्तः सन् कस्मिंश्चित् द्वीपे सम्मोहिन्याः वशं गतः अस्ति इति'' इति उक्तवान् प्रतापः ।

- (अनुवर्तते)



# र स वा र्ताः

## विलक्षणः हासः

गिन्नीसुपुस्तकं यथा विश्वस्तरीयाः अपूर्वघटनाः उल्लेखयति तथैव रिप्लेस्नामिकया संस्थया प्रकाशितं 'रिप्लेस् बिलीव् इट् आर् नाट्' इत्येतत् पुस्तकं चित्रविचित्रघटनाः निरूपयति । एतस्मिन् पुस्तके विश्वासानर्हाः बह्व्यः घटनाः उल्लिखिताः दृश्यन्ते । तया एव संस्थया इदानीं हासस्पर्धा काचित् आयोजिता अस्ति । टेक्सास्नगरीयाः एतस्यां स्पर्धायां भागं ग्रहीतुम् अर्हन्ति । अतिविचित्रं हासं ये प्रदर्शयन्ति तेभ्यः १५० डालरात्मकं (मार्किं रू १५,०००) पारितोषिकं दीयते । स्पर्धायां भागं ग्रहीतुम् इच्छवः रिप्लेस्- दूरवाणीसङ्ख्यायाः सम्पर्कं प्राप्य हासस्य आरम्भं कुर्युः । तेषां हासस्य ध्वनिमुद्रणं क्रियते स्पर्धायोजकैः । यस्य हासः चित्रातिविचित्रः भवति सः पारितोषिकं प्राप्स्यति ।

## न्यायालयं गतः शुनकः

अमेरिकादेशस्य लास् एञ्जलिस्नगरे निवसन् हैराल्ड्मार्षनामकः कश्चन न्यायवादी डेविल्मार्ष्-नामकं शुनकं त्रिभ्यः वर्षेभ्यः पालयन् आसीत् । यत्र यत्र सः गच्छति स्म तत्र सर्वत्र सः शुनकः तम् अनुसरति स्म । कदाचित् यदा सः किञ्चन उपाहारमन्दिरं गतवान् तदा उपाहारमन्दिर-स्वामी शुनकस्य प्रवेशावकाशं निराकृतवान् । 'उपाहारमन्दिरस्य अन्तः शुनकानां कृते प्रवेशः न स्यात् इति आरोग्याधिकारिणाम् आज्ञा अस्ति' इति वदन् स्वकृत्यं समर्थितवान् उपाहारमन्दिरस्वामी । एतेन क्रुद्धः सः न्यायवादी शुनकस्य प्रतिनिधित्वेन न्यायालयं प्रति एकम् अभियोगं नीतवान् । ''शुनकः दशसहस्राधिकवर्षेभ्यः मानवैः सह निवसन्, तैः सह विहरन्, तैः सह खादन् सहजीवनं यापयन् अस्ति । उन्मत्तशुनकस्य दंशनात् रेबिस्-नामकस्य रोगस्य प्रसारः भवति इत्येतत् सत्यम् एव चेदपि सामान्यशुनकस्य दंशनात् न कोऽपि अपायः'' इति स्ववादम् उपस्थापितवान् अस्ति सः ।

## सुमहती दिनदर्शिका

तत् किञ्चन पुस्तकम् । त्रयः सम्पुटाः सन्ति तस्य । आहत्य १५०० पुटात्मकम् अस्ति तत् पुस्तकम् । त्रिसम्पुटात्मकस्य तस्य पुस्तकस्य निमित्तं ५००० रूप्यकमूल्यकानि कागदानि उपयुक्तानि । स्मरन्तु एतत् यत् तस्य एका एव प्रतिकृतिः अस्ति इदानीम् । तस्य पुस्तकस्य वस्तु किम् इति ज्ञातुं विशेषकुतूहलं वा भवताम् ? तर्हि श्रृण्वन्तु तावत् । त्रिष्वपि सम्पुटेषु दिनदर्शिकाः सन्ति । प्रथमात् क्रिस्ताब्दात् १०,००० क्रिस्ताब्दान्तानां वर्षाणां दर्शिका अस्ति तत्र । ९९९९ तमवर्षस्य जून्मासस्य प्रथमां मूल-प्रतिकृतिं पश्यतु । उत्तरं तृतीये सम्पुटे प्राप्तुम् अर्हन्ति भवन्तः । एषा महादिनदर्शिका कुमारनामकेन तरुणेन सज्जीकृता अस्ति, यश्च मद्रास्नगरे पश्चिममाम्बुलम् प्रदेशे निवसति । समग्रस्य एतस्य सज्जीकरणार्थं तेन ४८ दिनानि विनियुक्तानि । जनपदाधिकारिणः, लयन्स्क्लब्, रोटरीक्लब्, जूनीयर् चेम्बर् इत्येतासां संस्थानां प्रमुखाणां च पुरतः तेन एतत् कार्यं कृतम् । तेषां साक्ष्यस्य आधारेण सुमहती दिनदर्शिका गिन्नीसुपुस्तके उल्लेखं प्राप्तवती अस्ति ।






# कः दुष्टः ? कः सज्जनः ?

आरब्धं कार्यं परित्यक्तुम् अनिच्छन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शाखायां लम्बमानं शवं स्कन्धे आरोप्य यथापूर्वं श्मशानाभिमुखं प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! एतस्मिन् मध्यरात्रे घोरे श्मशाने भवान् यत् एतत् कार्यं करोति तस्य प्रेरयिता कः ? पिता गुरुः वा न स्यात् खलु ? यद्यपि गुरुः पिता वा पूज्यौ एव, तथापि क्वचित् तौ अविचिन्त्य व्यवहरन्तौ अमार्गे प्रेरयितुम् अपि अर्हतः । अत्र कारणं युक्तायुक्ततानिर्णये तयोः असामार्थ्यम् । अत्र उदाहरणरूपेण विश्वदत्तनामकस्य कथां श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

हरप्रियपुरे विश्वदत्तः नाम कश्चन वणिक् आसीत् । तस्य पुत्रस्य नाम धनदत्तः इति । धनदत्तः बुद्धिमान् एव । किन्तु विचिन्त्य निर्णये असमर्थः । अतः पित्रा श्रमेण

## वेतालकथा



सम्पादितं धनं सः विना विवेचनं व्ययीकरोति स्म । पुत्रस्य एतादृशप्रवृत्तेः कारणतः विश्वदत्तः महान्तं खेदम् अनुभवति स्म ।

कदाचित् विश्वदत्तः पुत्रम् आहूय - ''वत्स ! मया सम्पादितं धनं सुखेन व्ययीकुर्वता भवता अद्यावधि विवेकः एव न प्राप्तः । अतः इतः परं भवतः व्ययार्थम् अहं धनं न दास्यामि । जीवननिर्वहणार्थं यत् धनम् आवश्यकं तत् स्वश्रमेण एव सम्पादयतु भवान्'' इति ।

पितुः वचनम् अवमाननाय मन्यमानः धनदत्तः वाणिज्यं कर्तुम् इच्छन् मित्राणि साहाय्यं प्रार्थितवान् । तदा तैः उक्तं - ''मूलधनविनियोगे भवतः अपि यदि भागः स्यात् तर्हि वयं किञ्चिद्धनसाहाय्यं कुर्याम । रिक्तहस्तस्य तु भवतः साहाय्यं कर्तुं न शक्नुमः वयम्'' इति । अतः अन्ते अनन्यगतिकतया धनदत्तः पितरम् एव धनं याचितवान् ।

तदा विश्वदत्तः उक्तवान् - ''अपेक्षामात्रेण कोऽपि वणिक् भवितुं न अर्हति । यस्य सामर्थ्यं भवति स तु धनं विना अपि बुद्धिबलम् एव मूलधनत्वेन उपयुज्य वाणिज्यारम्भं कृत्वा साफल्यं प्राप्तुम् अर्हति'' इति ।

''किं बुद्धिबलादिप्रस्तावेन । यदि मयि विश्वासः अस्ति तर्हि भवान् मह्यं सहस्रं सुवर्णनाणकानि ऋणरूपेण ददातु । ऋणस्वीकरणम् अहं पत्रद्वारा दृढीकरिष्यामि । वर्षाभ्यन्तरे वृद्धिसहितम् ऋणं प्रत्यर्पयिष्यामि च'' इति उक्तवान् धनदत्तः ।

''बुद्धिमत्तायाः अभावे धनस्थितितः अपि न किमपि प्रयोजनम् । अतः भवतः बुद्धिपरीक्षा आदौ भवेत् । तदर्थम् एका परीक्षा आयोजयिष्यते मया'' इति उक्तवान् विश्वदत्तः ।

हरप्रियपुरात् अनतिदूरे रमणपुरनामके ग्रामे अभिरामः बलरामश्चेति उभौ वसतः स्म । जनाः भावयन्ति स्म यत् तौ मान्त्रिकशक्तिमन्तौ इति । यः नूतनकार्यस्य आरम्भं कर्तुम् इच्छति सः यदि एतयोः अन्यतरस्य सेवां करोति तर्हि तस्य कार्यं सिद्धं भविष्यति इति प्रतीतिः आसीत् ।

एतत्सर्वं पुत्रं निवेद्य विश्वदत्तः उक्तवान् - ''भवान् इतः रमणपुरं गच्छतु । षट् मासान् यावत् अभिरामस्य, पुनः षट्

मासान् यावत् बलरामस्य च सेवां कृत्वा तयोः आशीर्वादं प्राप्नोतु । जनाः वदन्ति यत् अभिरामः दुष्टः, जनानां निन्दकः च इति । बलरामः तु सज्जनः जनहितकांक्षी च इति जनानाम् आशयः अस्ति । अतः तयोः विषये भवतः अभिप्रायः कः इति अहं ज्ञातुम् इच्छामि'' इति ।

धनदत्तः पितुः वचनम् अङ्गीकुर्वन् रमणपुरं प्रति प्रस्थितवान् । विश्वदत्तः पुत्राय वराटिकामात्रम् अपि धनं न दत्तवान् आसीत् । किन्तु पुत्रः यदा पितुः नाम उक्त्वा धनं याचते तदा धनं कश्चित् यथा दद्यात् तथा व्यवस्थां तु कृतवान् आसीत् ।




धनदत्तः आदौ अभिरामस्य गृहं गतवान् । तस्य आगमनोद्देशं ज्ञात्वा अभिरामः - ''वत्स ! भवान् मम मित्रम् इव । यः कोऽपि सन्देहः आगतः चेदपि भवान् मां निस्सङ्कोचं पृच्छतु । किन्तु एकं तु स्मर्तव्यं यत् भवता कदापि मयि कोपः न उत्पादनीयः । कोपसमये अहं यत् वदामि तत् तथैव भविष्यति एव । अतः मम कोपनेन भवतः हानिः एव सम्भवेत्'' इति उक्तवान् ।

अभिरामस्य रामप्रियः नाम पुत्रः, दमयन्ती नाम पुत्री च आस्ताम् । तौ वयसा धनदत्तात् अपि कनिष्ठौ । तौ बहून् विषयान् धनदत्तात् जानीतः स्म । गच्छता कालेन धनदत्तः यत् वदति तदेव वेदवाक्यं जातम् ।

अभिरामः धनदत्तं बहूनि वाणिज्य-रहस्यानि बोधयति स्म । सर्वाणि वाणिज्यतन्त्राणि श्रद्धया शृतवान् धनदत्तः कदाचित् अभिरामं पृष्टवान् - ''श्रीमन् ! भवत्तः मया बहवः विषयाः ज्ञाताः । भवता उक्तः मार्गः अनुसरणीयः चेत् प्रामाणिकता, सत्यनिष्ठा इत्यादयः परित्यक्तव्याः भवेयुः । अधर्मः च आचरणीयः भवेत् । एतत् युक्तं न खलु ?'' इति ।

तदा अभिरामः उक्तवान् - ''वाणिज्यं सदापि असत्यादिसम्मिश्रितम् एव भवति । वाणिज्यक्षेत्रे न्याय-धर्म-प्रामाणिकतादयः आधिक्येन न चिन्तनीयाः । किन्तु राज्ञः कोपः कथमपि यथा न स्यात् तथा जागरूकता आश्रयणीया । राज्ञः उच्चाधिकारिणां च तोषः यावत् भवति तावत् वाणिज्ये न कोऽपि क्लेशः'' इति ।

धनदत्तः एतत् बोधनं गृहीतवान् । सायं तदेव रामप्रियं दमयतीं च बोधितवान् । तौ अपि उत्साहेन एतत् बोधनं श्रुतवन्तौ ।



प्रतिदिनं धनदत्तः एतादृशम् एव बोधयति स्म इति कारणतः तौ निर्णीतवन्तौ यत् आवाभ्याम् अपि भाविजीवने वाणिज्यम् एव करणीयम् इति । अतः वाणिज्यव्यवहारज्ञाने तौ विशेषकुतूहलिनौ जातौ ।

एतां वार्तां कथमपि ज्ञातवान् अभिरामः । धनदत्तम् आहूय असन्तोषमिश्रितेन स्वरेण उक्तवान् - ''अहम् उत्तमानि वाणिज्यतन्त्राणि बोधयामि । भवान् तु मम पुत्रौ दुर्मार्गोपदेशेन नाशयन् अस्ति । किम् एतत् उचितम् ?'' इति ।

तदा धनदत्तः शान्तस्वरेण पृष्टवान् - ''आर्य ! भवान् मां यत् बोधितवान् तदेव अहं तौ बोधितवान् । एवं स्थिते मया किं वा अपराद्धम् ? तयोः नाशनार्थं कुत्र वा प्रयत्नः कृतः ?'' इति ।

''वाणिज्यं नाम असत्यकथनवञ्चनादीनाम् असूयायाः च क्षेत्रम् । तादृशे अनुचिते क्षेत्रे मम पुत्रयोः आसक्तिं जनयन् भवान् घोरम् अपराधम् एव कुर्वन् अस्ति '' इति कोपेन उक्तवान् अभिरामः ।

''यत् वाणिज्यम् अस्माकं जीवनं नाशयति तत् मां किमर्थं बोधितवान् भवान् ? किं भवान् मम प्रगतिं न इच्छति ?'' इति पृष्टवान् धनदत्तः ।

''तत्र कारणम् अपि अस्ति । वाणिज्यं यद्यपि अप्रशस्तमार्गावलम्बितं भवति तथापि लोके तत् अपरिहार्यम् । अतः जनान् अहं वाणिज्ये प्रेरयामि । किन्तु मम पुत्रौ वाणिज्ये आसक्तौ न भवेताम् इति मम इच्छा । अतः तौ उद्दिश्य वाणिज्यतन्त्रस्य बोधनम् अहं न इच्छामि'' इति उक्तवान् अभिरामः ।

''तन्नाम यदि हानिः भवति तर्हि अन्येषाम् एव भवतु, न तु मत्परिवारस्य इति खलु भवतः चिन्तनम् ? एतादृशं चिन्तनं किम् उचितम् ? सर्वथा असामञ्जस्यपूर्णः व्यवहारः भवतः'' इति धैर्येण उक्तवान् धनदत्तः ।

एतत् श्रुत्वा अभिरामः नितरां क्रुद्धः सन् - ''अये, गुरोः मम व्यवहारस्य एव युक्तायुक्ततां विमृशतः भवतः कियत् धाष्टर्यम् ? धिक् भवन्तम् । मम कोपं वर्धितवतः भवतः प्रतिदिनम् अशुभं भविष्यति । निर्गच्छतु इतः'' इति उक्तवान् ।

धनदत्तः तु उपेक्षया हसन् ततः निर्गतवान् । यावत् सः किञ्चिद्दूरं गतवान्

तावत् कदलीत्वचः उपरि पादस्य स्थापनात् पतितवान् । ततः उत्थातुम् अशक्नुवन् सः यावत् कष्टम् अनुभवन् आसीत् तावता कश्चन आगत्य तम् उत्थाप्य वैद्यसमीपं नीतवान् ।

वैद्यः तस्य योग्यां चिकित्सां कृत्वा व्रणस्य कारणं पृष्टवान् । तदा धनदत्तः प्रवृत्तं समग्रं निवेदितवान् ।

''अये ! अभिरामस्य शापः प्राप्तः वा भवता ? एवं तर्हि भवान् प्रतिदिनं किमपि अनिष्टं सम्मुखीकरिष्यति एव । किं विपदः स्वागतीकरणेन ? अद्यैव तं शरणं गत्वा क्षमां प्रार्थयतु'' इति बोधितवान् वैद्यः ।

''शापादिषु विश्वासः नास्ति मम । आधुनिके काले अपि यः शापादिषु विश्वसिति सः निश्चयेन मूर्खः एव । ममापि युक्तायुक्तताविवेकः अस्ति । यदि आवश्यकता भविष्यति तर्हि प्रतिदिनं भवत्समीपम् आगत्य चिकित्सां प्राप्नुयां, किन्तु कदापि तं वराकम् अभिरामं शरणं न गमिष्यामि'' इति उक्तवान् धनदत्तः ।

वैद्यः क्षणकालम् आलोच्य - ''वत्स! भवतः चिकित्सार्थम् अहं यावन्तं व्ययं करोमि तावत् हरिहरपुरीयः विश्वदत्तः दास्यति । अतः चिकित्साकरणे मम न कोऽपि क्लेशः । जानद्भिः अस्माभिः दिने दृष्टे कूपे रात्रौ न पतनीयम् । स्वास्थ्यं हि अमूल्यं लोके । तस्य नाशः सर्वथा अनुचितः । अभिरामः शरणं गतः चेत् सर्वं सुष्ठु भविष्यति । अथवा बलरामं वा शरणं गच्छतु । ततः अपि भवान् अपायात् मुक्तः




भवेत् कदाचित्'' इति सूचितवान् ।

''बलरामस्य गृहं प्रति एव अहं प्रस्थितवान् आसम् । बलरामः किं मम आगमनं सन्तोषेण स्वागतीकुर्यात् ?'' इति पृष्टवान् धनदत्तः ।

''वस्तुतः मार्गे पतितं भवन्तम् अत्र बलरामः एव आनीतवान् । परोपकारी सः । सर्वान् अपि प्रीत्या आदरेण च पश्यति सः'' इति उक्तवान् वैद्यः ।

ततः धनदत्तः बलरामस्य गृहं गत्वा स्वपरिचयम् उक्त्वा प्रवृत्तं समग्रं निवेदितवान् ।

सर्वं श्रुत्वा बलरामः उक्तवान् - ''वाणिज्यं प्रजाहितार्थं परोपकारार्थं च स्यात् । तदुभयं वाणिज्यात् कथं सम्पादनीयम् इति तु स्वानुभवात् एव ज्ञातव्यम् । अतः भवान् अद्यैव वाणिज्यस्य



आरम्भं करोतु । मूलधनं तु अहं दास्यामि । प्राप्ते लाभे उभयोः अपि समभागः भवतु । एतत् अनुमतं खलु भवतः ?'' इति ।

तदा धनदत्तः आश्चर्यम् अनुभवन् पृष्टवान् - ''श्रीमन् ! भवान् सज्जनः इति मया श्रुतम् । एवं स्थिते वञ्चनाबहुले वाणिज्ये मां किमर्थं प्रवर्तयितुं प्रयत्नं करोति भवान् ?'' इति ।

''वत्स ! वैद्यः चिकित्सार्थं यथा धनं प्राप्नोति, गायकः गानस्य निमित्तं यथा धनं प्राप्नोति तथा वणिक् कृतस्य वाणिज्यस्य निमित्तं धनं प्राप्नोति । अतः न्याय्येन मार्गेण वाणिज्ये प्रवर्तनं न पापाय । अतिलाभाशया दुर्मिश्रणे प्रवर्तनं, वञ्चनामार्गस्य आश्रयणम् इत्यादयः न करणीयाः । भवन्तं मार्गे योजयितुम् एव भागहरत्वेन अहम् अपि वाणिज्ये प्रवृत्तः अस्मि'' इति उक्तवान् बलरामः ।

धनदत्ताय एतानि वचनानि अरोचन्त । अतः सः झटिति वाणिज्यम् आरब्धवान् । बलरामस्य आशीर्वादात्, दैवबलात् वा तस्य वाणिज्यं मासचतुष्टयाभ्यन्तरे एव प्रवृद्धम् । बलरामः मूलधनरूपेण सहस्रं रूप्यकाणि दत्तवान् आसीत् । प्रथमे मासद्वये एव पञ्चसहस्रं रूप्यकाणि लाभरूपेण प्राप्तानि । तत्र अर्धभागं बलरामाय दत्तवान् धनदत्तः । अग्रे प्रतिमासं लाभः प्रवृद्धः एव । प्रतिमासं लाभस्य अर्धभागं बलरामाय यच्छति स्म धनदत्तः । यदा पञ्चमः मासः अतीतः तदा धनदत्तः चिन्तितवान् - 'बलरामः यावत् धनं मूलधनरूपेण दत्तवान् ततः बहुगुणितं धनं लाभरूपेण सः एतावता एव प्राप्तवान् अस्ति । यदि वृद्धिव्यवहारं सः कुर्यात् तर्हि वर्षानन्तरम् अपि एतस्य अर्धभागम् अपि वृद्धिरूपेण प्राप्तवान् न स्यात्' इति ।

अतः सः कदाचित् बलरामम् उक्तवान् - ''आर्य ! भवान् मह्यं मूलधनरूपेण यावत् दत्तवान् तस्य वृद्धिम् अनन्तगुणितं लाभं च प्राप्तवान् अस्ति । अतः इतः परं लाभे भागं मा पृच्छतु'' इति ।

तदा कुपितः बलरामः - ''वाणिज्ये आवाम् अंशभागिनौ । अहं मूलधनस्य विनियोगं कृतवान् । ततः भवान् वाणिज्यं कृतवान् । उभयोः अपि लाभे समभागः इति तु आवयोः सन्धिः आसीत् एव । इदानीं धनाशया सन्धेः भङ्गः न उचितः'' इति उक्तवान् ।

''आवयोः सन्धिः आसीत् इति तु सत्यम् एव । किन्तु स च सन्धिः वञ्चनापूर्णः आसीत् । तत् इदानीं मया ज्ञातम् अस्ति । अन्यच्च स च सन्धिः पत्रलेखनदानेन प्रमाणीकृतः तु न । तत्कारणतः तस्य सन्धेः पालनम् इतः परं मया न क्रियते । यदि भवान् एतत् न अङ्गीकरोति तर्हि मया भवतः सहवासः एव परित्यज्यते'' इति ।

''भवान् यथा इच्छति तथैव भवतु । किन्तु इतः परं यत् प्रवर्तिष्यते तस्य मम च कोऽपि सम्बन्धः न भविष्यति'' इति उक्तवान् बलरामः ।

एतदनन्तरं धनदत्तः विना वचनं ततः निर्गत्य मार्गम् आगतवान् । तत्र सः स्खलनात् पतितः सन् उत्थातुम् एव न शक्तवान् । दयालुः कश्चित् तं चिकित्सालयं नीतवान् ।

वैद्यः यथोचितचिकित्सां कृत्वा - ''अये, अभिराम-बलरामयोः वाक्सिद्धिः अस्ति । बाल्यात् एव ताभ्याम् एषा शक्तिः प्राप्ता अस्ति । प्रायः दैवानुग्रहः एव अत्र कारणम् । किन्तु तयोः वाक्सिद्धिः एतद्ग्रामपरिसरमात्रे कार्यकारिणी, न अन्यत्र । यदि इतः परम् अपि भवान् अत्र भविष्यति तर्हि प्रतिदिनं भवतः विपत्तिः निश्चिता । अतः भवान् अद्यैव एतं ग्रामं परित्यजतु'' इति सूचितवान् ।

धनदत्तः तस्मिन् एव दिने तं ग्रामं परित्यज्य गत्वा गृहं प्राप्य पितरं प्रवृत्तं समग्रं निवेद्य - ''अभिरामः बलरामः च दुष्टौ एव । उभौ अपि शापम् एव दत्तवन्तौ'' इति



उक्तवान् ।

तदा विश्वदत्तः - ''भवतः बुद्धिमत्ता कियती इति मया ज्ञातम् । भवान् वाणिज्यार्थम् अर्हः न । यतः वाणिज्ये महती बुद्धिमत्ता अपेक्षिता । कृष्यर्थं पशुपालनार्थं वा अर्हः भवान्'' इति उक्तवान् ।

वेतालः एवं कथां समाप्य अवदत् - ''अये राजन् ! पुत्रः वाणिज्यार्थम् अर्हः न इति विश्वदत्तः यत् निर्णीतवान् तत् किम् उचितम् ? धनदत्तः स्वानुभवबलात् ज्ञातवान् आसीत् यत् अभिरामः बलरामः च दुष्टौ इति । यदा धनदत्तात् स्वप्रयोजनं नास्ति इति तौ ज्ञातवन्तौ तदा कुपितौ तौ शापं दत्तवन्तौ । अतः तयोः दुष्टता तावत् सिद्धा । किन्तु विश्वदत्तस्य आशयः अस्ति यत् तयोः अन्यतरः सज्जनः अस्ति इति ।

अन्यच्च धनदत्तः वाणिज्यम् आरभ्य प्रभूतं लाभं सम्पादितवान् आसीत् । तादृशम् अपि पुत्रं विश्वदत्तः किमर्थम् उक्तवान् यत् भवान् वाणिज्यार्थम् अनर्हः इति ? केन आधारेण अभिराम-बलरामयोः अन्यतरः सज्जनः इति विश्वदत्तः निर्णीतवान् ? मम एतेषां प्रश्नानाम् उत्तराणि भवान् जानन् अपि यदि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः उक्तवान् - ''अभिरामः दुष्टः इत्यत्र नास्ति सन्देहः । यतः यत् अनुचितम् इति सः जानाति तदेव सः अन्यं कर्तव्यत्वेन बोधयति स्म । किन्तु बलरामः न तथा । धनदत्तस्य सामर्थ्यम् अजानन् अपि सः तस्य सामर्थ्ये विश्वस्य मूलधनं विनियुक्तवान् । एतत् एव तस्य सज्जनतां द्योतयति । तस्य आशीर्वादस्य फलतः धनदत्तस्य वाणिज्यं दिने दिने प्रवृद्धम् । धनदत्ताय शापं दत्तवान् तु अभिरामः । बलरामस्य परिचयः यदा धनदत्तेन प्राप्तः तदा अभिरामस्य शापः शक्तिहीनः जातः आसीत् । अतः धनदत्तः ततः अग्रे विपदं न प्राप्तवान् आसीत् । किन्तु अविवेकी धनदत्तः एतत् सर्वं ज्ञातुम् अशक्नुवन् 'भवते लाभं न दास्यामि' इति बलरामम् उक्तवान्, भवतः सहवासं न इच्छामि इत्यपि सूचितवान् सः । एवं धनदत्तात् अपमानितः बलरामः स्वस्य अनुग्रहं प्रतिस्वीकृतवान् । तस्मात् अभिरामस्य शापस्य शक्तिः उज्जीविता अभवत् । किन्तु एतस्य कारणं किम् इति न अवगतवान् धनदत्तः । बलरामस्य कोपः एव कारणम् इति निर्णीतवान् सः । अतः गृहं प्रत्यागत्य सः 'उभौ अपि दुष्टौ' इति पितरं निवेदितवान् । एतत् श्रुत्वा विश्वदत्तः निर्णीतवान् यत् वाणिज्यार्थम् आवश्यकं नैपुण्यं विचक्षणता वा धनदत्तस्य सर्वथा नास्ति इति । धनदत्तः वाणिज्ये लाभं यत् प्राप्तवान् तत् बलरामस्य आशीर्वादात् एव इति मया किं पुनर्वक्तव्यम् ?'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान् ।



# कर्णाटकराज्याभिमुखम्

रचना - मीरानायर् ◆ चित्रम् - गौतमसेनः




गोवासमुद्रतीरे दक्षिणाभिमुखं गतं चेत् मारगोवा नौकास्थानं प्राप्यते । अस्मद्देशीयेषु प्रकृतिसहजेषु नौकास्थानेषु एतत् अन्यतमम् अस्ति । गोवराज्ये प्राप्यमाणाः अयः, म्यांगनीस् इत्यादयः खनिज-मिश्रलोहाः इतः विदेशान् प्रति प्रेष्यन्ते । अतः एतत् नौकास्थानं सर्वदा यातायातसहितं दृश्यते ।

मारगोवातः अनतिदूरे अतिविशालं कोल्वासमुद्रतीरम् अस्ति । कोल्वासमुद्रतीरे काबोडीरामापर्यन्तं श्वेतवर्णीयाः सिकताः प्रसृताः दृश्यन्ते । श्रीरामः वनवासकाले अत्र कानिचन दिनानि वासं कृतवान् आसीत् इति कथा श्रूयते । समुद्रतीरे २५ कि.मी. दूरे बेनालियून्नामकः ग्रामः अस्ति, यत्र च श्रीरामस्य बाणः पतितः आसीत् इति प्रतीतिः अस्ति ।

कोल्वातीरे सुप्रसिद्धम् इग्रेजाडिसोजा सेन्वोरा पैपेड्मन्दिरम् अस्ति । अत्र बालक्रिस्तस्य प्रतिमा अस्ति । अस्वस्थानाम् अस्वास्थ्यं निवारयितुं सामर्थ्यम् अस्ति तस्याः प्रतिमायाः इति भक्ताः भावयन्ति ।

गोवाराज्यस्य दक्षिणाग्रे पोलेम्-समुद्रतीरम् अस्ति । गोवा-कर्णाटकसीमातः गव्यूतिदूरे स्थितम् एतत् समुद्रतीरम् प्रति जनाः आधिक्येन न आगच्छन्ति ।



कोल्वातीरम्

पश्चिमसमुद्रतीरस्थं भूभागम् अपि परशुरामः एव समुद्रात् उन्नीतवान् इति कथा श्रूयते । अतः एव एतस्य क्षेत्रस्य 'परशुरामक्षेत्रम्' इत्यपि निर्देशः दृश्यते । एतस्य समुद्रतीरस्य उत्तरभागे कारवारनगरम् अस्ति । एतस्य त्रिषु अपि पार्श्वेषु समुद्रतीरम् अस्ति ।

कारवारनगरम्

कारवारनौकास्थानं सर्वासु अपि ऋतुसु प्रयाणानुकूलः भवति । सुन्दरं सहजं च अस्ति एतत् । नैऋत्यमारुतात् एतत् तीरं देशं रक्षति । मुम्बयीतः कोलम्बों प्रति गच्छन्त्यः नौकाः आवर्षम् एतस्य नौकास्थानस्य उपयोगं कुर्वन्ति । अरबजनाः एतत् नोकास्थानं बैट्-३-कोल्नाम्ना निर्दिशन्ति स्म । मरीचः, एला, इत्यादीनि सुगन्धद्रव्याणि, वस्त्रविशेषान् कृष्णवर्णमिश्रितानि नीलवस्त्राणि च एतस्मात् नौकास्थानात् विदेशान् प्रति प्रेष्यन्ते ।

सुन्दरे एतस्मिन् नगरे १८८३तमे वर्षे ग्रीष्मकाले अत्र वसन् रवीन्द्रनाथठागोर्वर्यः 'प्रकृतिर् प्रतिशोध्' नामकं स्वकीयं प्रथमं श्रेष्ठरूपकं रचितवान् । तत्काले रविन्द्रनाथवर्यस्य सहोदरः सत्येन्द्रनाथठागोरवर्यः कारवारजनपदस्य न्यायमूर्तिः आसीत् ।

कारवारतः अनतिदूरे एव अङ्कोलासमुद्रतीरम् अस्ति । कदम्बचालुक्य-वंशीयानां विजयनगरराजानां काले च एतत् प्रमुखं वाणिज्यकेन्द्रम् आसीत् । अस्माकं देशस्य स्वातन्त्र्यसङ्ग्रामकाले, तत्रापि लवणसत्याग्रह-काले करनिराकरणकाले च अङ्कोलाक्षेत्रीयं कार्यं प्राधान्यम् आवहति स्म ।



*रवीन्द्रनाथ ठागूर्*



*अङ्कोलाक्षेत्रे बहवः स्वातन्त्र्यसङ्ग्रामाः प्रवृत्ताः*




अङ्कोलातः ८ कि.मी. दूरे 'होन्नेबयलु' इत्यत्र प्रसिद्धः जैनमहालयः अस्ति ।

कारवारतः ६० कि.मी. दूरे दक्षिणकाशीनाम्ना प्रसिद्धं गोकर्णक्षेत्रम् अस्ति । एतत् प्रमुखं शिवक्षेत्रम् । अत्र महाबलेश्वरमन्दिरे सुप्रसिद्धम् आत्मलिङ्गम् अस्ति । रावणासुरेण एतत् अत्र परित्यक्तम् इति कथा श्रूयते । पूर्वं रावणेश्वरेण बहूनां वर्षाणां तपसा प्राप्तम् आत्मलिङ्गं विघ्नेश्वरः उपायेन अत्र स्थापितवान् । ततः तत् उन्नेतुं सर्वथा न शक्तवान् रावणः । अतः एव तस्य 'महाबलेश्वरः' इति नाम जातम् इति पुराणकथातः श्रूयते । गर्भगृहे भूमिस्तरात् द्विपादपरिमितभागमात्रं भक्तैः द्रष्टुं शक्यम् । द्वादशसु वर्षेषु एकवारं प्रचलति अष्टबन्धोत्सवे लिङ्गस्य समग्रता द्रष्टुं शक्या भक्तैः ।

इतः किञ्चिद्दूरे तालवृक्षमये तीरे स्थितं श्रीगन्धशिल्पनिमित्तं ख्यातिं गतं कुमटानगरम् अस्ति ।

कर्णाटकराज्ये 'गुदिगार'नाम्ना प्रसिद्धः एते साम्प्रदायिककाष्ठ-शिल्पकाराः अपूर्वस्य काष्ठशिल्पस्य निर्माणे सुनिपुणाः ।

एतस्मात् नगरात् अनतिदूरे होन्नावरनगरम् अस्ति, यच्च प्राचिने काले





चन्द्रनाथेश्वरमन्दिरस्थः
चन्द्रनाथतीर्थङ्करः

भट्कळनगरस्थे मन्दिरे स्थितम्
अहितुण्डिकशिल्पम्

सुवर्णपुरी इति ख्यातम् आसीत् । रामायणकाले एव एतत् नगरी आसीत् इति श्रूयते । अत्रत्यं रामतीर्थ-नामकम् उत्सं श्रीरामः एव सृष्टवान् इति प्रतीतिः । हैदरालीकाले एतत् नौकाकेन्द्रम् आसीत् । वाणिज्यकेन्द्रत्वेन अपि प्रसिद्धम् अस्ति इदानीम् एतत् नगरम् । अत्रत्या शरावतीसेतुः कर्णाटकराज्ये एव सुदीर्घा ।

उत्तरकन्नडजनपदस्य दक्षिणाग्रे भट्कळसमीपे बासाडि-प्रदेशः अस्ति । अत्र प्रसिद्धाः १२ जैनालयाः सन्ति । एतेषु ५०० वर्षेभ्यः पूर्वं निर्मितः चन्द्रनाथेश्वरदेवालयः रमणीयः अस्ति ।

भट्कळतः ६ कि.मी. दूरे अरण्यैः आवृतः नेत्राणीद्वीपः अस्ति । अत्र कपोताः आधिक्येन दृश्यन्ते इत्यतः आंग्लेयाः एतं द्वीपं 'कपोतद्वीपः' इति निर्दिशन्ति स्म । एतस्मिन् द्वीपे स्टिप्ट्लेट्पक्षिणः अपि आधिक्येन दृश्यन्ते । एतेषां नीडान् उपयुज्य निर्मीयमाणं 'पक्षिनीडसूपं' (बर्ड्स्नेस्ट् सूप्) चीनादेशीयाः महता प्रेम्णा पिबन्ति ।



यक्षगानपात्रधारी

कपोतद्वीपात् दक्षिणतः 'सूर्यनगरी' इति ख्यातं कुन्दापुरम् अस्ति । एतत् दक्षिणकन्नडजनपदे अस्ति । कर्णाटकपरस्परायुक्तस्य नृत्यनाटक - विशेषस्य 'यक्षगान'स्य 'बडुंतिट्टु'नामकस्य प्रकारस्य एतत् नगरं केन्द्रायते । 'मुद्दण'नाम्ना ख्यातः कन्नडभाषीयः कविः नन्दाळिके श्री लक्ष्मीनारायणप्पः एतन्नगरीयः एव । एतस्मिन् नगरे सर्वकारीये माध्यमिकविद्यालये शारीरकशिक्षकत्वेन कार्यं कुर्वन् सः रमणीयं 'रामाश्वमेध'नामकं ग्रन्थं रचितवान् आसीत् ।



# आत्मख्यापनम्

श्रावणपुरे नरसिंहः नाम कश्चन धनिकः कृषिकः आसीत् । तस्य पुत्रस्य नाम शिवमूर्तिः इति । सः समीपस्थे ग्रामे स्थिते गुरुकुले विद्याभ्यासं समाप्य स्वग्रामं प्रत्यागतवान् आसीत् ।

शिवमूर्तिः स्वभावतः उत्तमः एव । किन्तु आत्मश्लाघने तस्य विशेषरुचिः आसीत् । एषा प्रवृत्तिः न उचिता इति तं बहुधा बोधितवान् आसीत् नरसिंहः । तथापि शिवमूर्तेः आत्मश्लाघनप्रवृत्तिः तु यथापूर्वम् अनुवर्तते स्म ।

पित्रा बहुवारं बोधितः शिवमूर्तिः कदाचित् पितरम् उक्तवान् - "मयि यत् अस्ति तस्य प्रकाशने को दोषः ? मयि गुणाः सन्ति । तान् अहं शब्दैः प्रकाशयामि । अत्र न किमपि अनौचित्यम्" इति ।

पुत्रेण सह वादं कर्तुम् अनिच्छन् नरसिंहः मौनम् आश्रितवान् ।

कदाचित् नरसिंहः कस्यचित् कार्यस्य निमित्तं श्यालस्य शेषाचार्यस्य ग्रामं गतवान् । तत्र शिवमूर्तेः स्वभावस्य प्रस्तावः आगतः । तदा नरसिंहः स्वपुत्रस्य चिन्तनरीतिं विस्तरेण निवेदितवान् ।

सर्वं श्रुत्वा शेषाचार्यः उक्तवान् - "शिवमूर्तेः स्वभावस्य परिष्कारविषये भवान् अधिकं मा चिन्तयतु । तस्य स्वभावम् अहम् उपायेन परिष्करिष्यामि । कार्यव्याजेन तम् अत्र प्रेषयतु भवान् । ततः यथोचितम् अहं करिष्यामि" इति ।

गृहं प्रत्यागतः नरसिंहः पुत्रम् उद्दिश्य - "भवतः मातुलः भवन्तं द्रष्टुम् इच्छति । विशेषकार्यनिमित्तं सः भवतः साहाय्यम् इच्छति इति भाति" इति उक्तवान् ।

मातुलः शेषाचार्यः साहाय्यम् इच्छति' इत्येतत् श्रुत्वा नितरां सन्तुष्टः शिवमूर्तिः अनन्तरदिने एव मातुलग्रामं प्रति प्रस्थितवान् ।

गृहम् आगतं भागिनेयम् आदरेण एव सत्कृत्य शेषाचार्यः शिवमूर्तिं पृष्टवान् -




''भवान् नगरे स्थितं प्रसिद्धवणिजं गोविन्दगुप्तं जानाति वा ?'' इति ।

''न'' इति वदन् शिरः चालितवान् शिवमूर्तिः । तदा शेषाचार्यः उक्तवान् - ''अहम् अपि तं न जानामि । किन्तु तत्सकाशे मम किञ्चित् कार्यम् अस्ति । यदि भवान् मां तत्समीपं नयेत् तर्हि तस्य परिचयं प्राप्नुयात् । तेन कालान्तरे भवतः लाभः भवेत् । श्वः एव आवां नगरं गच्छाव तावत्'' इति ।

''तस्य तादृशं श्रेष्ठत्वम् अस्ति वा, येन अहं तस्य परिचयं प्राप्नुयाम् ? अपरिचितस्यापि परिचयं विना क्लेशं प्राप्तुं सामर्थ्यम् अस्ति मम । भवान् मया सह आगच्छतु । ततः तस्य परिचयः प्राप्तप्रायः इत्येव चिन्तयतु'' इति उक्तवान् शिवमूर्तिः ।

तदा शेषाचार्यः हसन् - ''तथैव भवतु नाम । कथमपि कार्यं सिद्ध्यति चेत् तावता अलम्'' इति उक्तवान् ।

अनन्तरदिने शिवमूर्तिः शेषाचार्यः च मध्याह्नाभ्यन्तरे नगरं प्राप्तवन्तौ ।

नगरप्राप्त्यनन्तरं शेषाचार्यः कुत्रचित् शकटं स्थगयित्वा - ''अत्रैव गोविन्दगुप्तस्य गृहम् आसीत् इति स्मरणं मम'' इति वदन् शकटचालकाय भाटकधनं दत्त्वा तं प्रेषितवान् । ततः अभिमुखम् आगतां शाकविक्रयिकां पृष्टवान् च - ''आर्ये, गोविन्दगुप्तवर्यस्य गृहं जानाति वा भवती ?'' इति ।

तदा सा महिला हसन्मुखतां प्रदर्शयन्ती - ''तस्य महात्मनः गृहं को वा न जानाति ? नगरे लघुबालिका पृष्टा चेदपि सा गोविन्दगुप्तस्य गृहं प्रदर्शयेत् एव'' इति वदन्ती मार्गं प्रदर्शितवती ।

तया दर्शितेन मार्गेण गच्छन् शेषाचार्यः किञ्चिद्दूरं गमनस्य अनन्तरम् पुनरपि अभिमुखम् आगतम् उद्दिश्य प्रश्नं कृतवान् - ''गोविन्दगुप्तस्य गृहं कुत्र ?'' इति ।

सः महता उत्साहेन गोविन्दगुप्तस्य गृहं प्रति गमनस्य मार्गं प्रदर्श्य - ''भवान् कः इति किम् अहं ज्ञातुम् अर्हामि ?'' इति पृष्टवान् ।

तदा शेषाचार्यः दीनतां मुखव्यवहारेण द्योतयन् - ''आवां समीपग्रामवासिनौ । कष्टस्थितौ स्थितौ आवां साहाय्यम् अपेक्ष्य अत्र आगतौ स्वः'' इति उक्तवान् ।

तदा सः सज्जनः - ''एवं वा ? तर्हि

गोविन्दगुप्तस्य दर्शनमात्रेण एव भवतां कष्टानि अपगतानि भविष्यन्ति । तादृशः दयामयः जनः लोके अन्यः कोऽपि नास्ति । निर्धनः अहं तस्य साहाय्येन एव वाणिज्यम् आरभ्य इदानीं सुखमयं जीवनं यापयन् अस्मि'' इति उक्तवान् ।

शेषाचार्यः तस्मै नमस्कारं समर्प्य पुनः अग्रे गतवान् । पञ्चनिमेषाणाम् अनन्तरं ताभ्यां गोविन्दगुप्तगृहं प्राप्तम् ।

यदा तौ गृहस्य अन्तः गतवन्तौ तावता गोविन्दगुप्तः अन्यैः त्रिभिः ज्येष्ठैः सह वार्तालापं कुर्वन् आसीत् । दूरात् एव शेषाचार्यं दृष्ट्वा सः महता आदरेण - ''आगच्छतु मान्यवर ! एषु दिनेषु दर्शनम् एव नास्ति खलु भवतः !'' इति आत्मीयतामिश्रितेन स्वरेण उक्तवान् ।

एतं प्रश्नं श्रुत्वा शिवमूर्तिः नितराम् आश्चर्यचकितः । शेषाचार्यस्तु मन्दहासं प्रकटयन् - ''गतेषु दिनेषु कार्यभारः किञ्चित् अधिकः आसीत् । अतः आगन्तुं न शक्तं मया । अपि भवान् कुशली ?'' इति प्रष्टवान् ।

गोविन्दगुप्तः हासपूर्वकं शिरश्चालनेन स्वकुशलवार्तां संसूच्य ततः अग्रे गतवान् । तदा तत्र उपस्थितेषु कश्चन शेषाचार्येण सह सम्भाषमाणः शिवमूर्तिम् अङ्गुल्या निर्दिश्य - ''भवता सह आगतः एषः कः ?'' इति पृष्टवान् ।

तदा शेषाचार्यः - ''एषः मम भागिनेयः । नरसिंहार्यं जानीयात् खलु भवान् ? तस्य पुत्रः शिवमूर्तिः एषः'' इति



उक्तवान् ।

''अहो, एषः एव वा शिवमूर्तिः नाम ! एतस्य नाम मया इतः पूर्वम् एव श्रुतम् । मम पुत्रः अपि तस्मिन् एव गुरुकुले पठति स्म, यस्मिन् च एषः पठति स्म । आत्मख्यापने महती रुचिः एतस्य इति श्रुतं मया । श्रेष्ठस्य एतस्य दर्शनात् अद्य अहं कृतार्थः अस्मि'' इति उपहासमिश्रितेन स्वरेण उक्तवान् सः ज्येष्ठः ।

एषः उपहासः शिवमूर्तेः मनसि महान्तं खेदम् अजनयत् ।

ततः किञ्चित्कालं तत्रत्यैः सह आत्मीय-वार्तालापं कृतवान् शेषाचार्यः । यदा भोजनसमयः आसन्नः तदा गोविन्दगुप्तः शेषाचार्यं शिवमूर्तिं च आदरेण भोजनशालां नीतवान् । ताभ्यां सह उपविश्य भोजनं कुर्वन् सः भोजनकाले

अनुरोधवचनानि उक्तवान् । भोजनानन्तरं किञ्चित्कालं विश्रान्तिसुखम् अनुभूय गोविन्दगुप्तस्य अनुज्ञां प्राप्य प्रतिप्रयाणम् आरब्धवान् शेषाचार्यः ।

प्रतिप्रयाणसमये महता गाम्भीर्येण याने उपविष्टवान् आसीत् शिवमूर्तिः । एतत् जानन् शेषाचार्यः शिवमूर्तिं मन्दहासपूर्वकं पृष्टवान् - ''किं वत्स ! किम् एतत् गाम्भीर्यम् ? प्रयाणं किं हितकरं न जातम् ?'' इति ।

तदा शिवमूर्तिः शिरः अवनमय्य एव उक्तवान् - ''भवता यथा चिन्तितं तथैव प्रवृत्तं खलु सर्वम् अपि'' इति ।

तदा शेषाचार्यः एतस्य तात्पर्यम् अनवगच्छन् इव व्यवहरन् - ''मया किं चिन्तितम् आसीत् इति भवान् ज्ञातवान् ?'' इति पृष्टवान् ।

शिवमूर्तिः क्षणकालस्य अनन्तरम् उक्तवान् - ''नगरं प्रति गमनस्य उद्देशः मया सुस्पष्टम् अवगतः अस्ति । मम आत्मश्लाघनप्रवृत्तिं दूरीकर्तुम् एव भवता अहं नगरं प्रति नीतः । गोविन्दगुप्तस्य आत्मीयः सन् अपि भवान् तम् अजानन् इव व्यवहरन् तद्गृहं प्रति गमनार्थं मार्गं विचारयन् तस्य श्रेष्ठतां मां श्रावितवान् । निराडम्बरस्य, मूर्तिमद्विनयस्य, स्नेहमूर्तेः, गोविन्दगुप्तस्य समीपं मां नयन् भवान् मत्पुरतः उन्नतम् आदर्शम् उपस्थापितवान् । तत्र उपहासपूर्वकं यत् वचनं श्रुतं ततः मयि विवेकः उदितः'' इति ।

तदा शेषाचार्यः शिवमूर्तेः भुजस्य उपरि हस्तं स्थापयन् - ''मानवस्य श्रेष्ठता तदीय-व्यवहारस्य आधारेण भवति । 'इन्द्रोऽपि लघुतां याति स्वयं प्रख्यापितैः गुणैः' इति वचनं भवता श्रुतम् एव खलु ? यदा अन्ये अस्माकं श्रेष्ठतायाः प्रशंसां कुर्वन्ति तदा एव वस्तुतः श्रेष्ठता सिद्ध्यति । अतः उत्तम-व्यवहारेण अस्माभिः जनेषु उत्तमाभिप्रायः उत्पादनीयः'' इति बोधितवान् ।

मातुलस्य वचनानां श्रवणेन शिवमूर्तिः आत्मनः दोषान् सम्यक् अवगतवान् । ततः आरभ्य सः आत्मश्लाघनप्रवृत्तिं परित्यज्य विनयगुणादीन् आत्मनि योजयन् 'श्रेष्ठः जनः' इति कीर्तिं सम्पादितवान् ।



# चन्दमामायाः

# सुवर्णसमयः

## मृत्युगुहा

राजा उदयनः
भयङ्करैः घोरिकुलीयैः
गृहीतः अभवत् ।

अहो, अ
द्रष्टुं न
शक्नोमि

मम मन्त्रशक्ति
प्रभावतः एवं
जातम् ।
सायङ्कालाभ्यन्तरे
भवतः मरणं
भविष्यति ।

सङ्कीर्णमार्गयुक्तायाः
एतस्याः गुहायाः बहिः
स्थितं मान्त्रिकसरः एव
भवन्तं रक्षेत्, न अन्यत्

युवराजः धैर्येण मृत्यु
गुहां प्रविष्टवान् ।

गुरुणा उपदिष्टं रहस्यसूत्रं
सः स्मृतवान् ।

अन्धेन करणीय
यत् ……

तत् रहस्यसूत्रं किम् ?



# सुवर्ण - समयस्य प्रश्नावली

१. गते शतके फ्रान्स्देशीयः जीवशास्त्रज्ञ हेन्री मौहाट् काम्बोदियाप्रदेशे भ्रमरविशेषस्य अन्वेषणं कुर्वन् सुविशाल-साम्राज्यस्य राजधानीत्वेन स्थितस्य नगरस्य अवशेषान् प्राप्तवान् । तस्य नगरस्य नाम किम् ? तत्र प्राप्तस्य शिलाविग्रहस्य नाम किम् ?



२.



पोर्चुगीस्‌जनाः यदा एतं पक्षिणं दृष्टवन्तः तदा ते एतस्य विकृताकृतिं मनसि निधाय 'दोडो' (विकृतमुखः) इति नाम कृतवन्तः । एते पक्षिणः प्रपञ्चस्य कस्मिन् प्रदेशे दृश्यन्ते ?

३.

एतत्क्रमानुसारम् अग्रिमा आकृतिः का भवेत् ?

४.

महाराष्ट्रराज्ये ग्राम-प्रदेशे प्रसिद्धस्य जानपदनृत्यप्रकारस्य एतस्य नाम किम् ?



५.

एषः अण्डमान्‌द्वीपीयः मूलनिवासी कं लक्ष्यीकृत्य बाणप्रयोगं कुर्वन् अस्ति ?



६.

नौकातः बहिः लम्बमानविग्रहस्य पादभागः जलस्पर्शं कुर्वन् अस्ति । नदीजलं प्रतिनिमेषं १० से.मी. वर्धमानम् अस्ति । विग्रहस्य औन्नत्यम् एक-मीटरात्मकम् । एवं तर्हि घण्टा-नन्तरं विग्रहस्य कतमः भागः जलावृतः भवेत् ?



# पाण्डाप्राणिनं रचयन्तु भवन्तः

एतस्य चित्रस्य विशालरूपं (झेराक्सादितन्त्रेण) प्राप्य दृढपत्रस्य उपरि एतस्य प्रतिकृतिं रचयन्तु भवन्तः । बिन्दुरेखा अपि तत्र भवतु ।

विश्वप्रकृतिनिधेः चिह्नम् अस्ति एषः पाण्डाप्राणी ।

ततः चित्रं कर्तयन्तु । यत्र बिन्दुरेखा अस्ति तत्र दृढपत्रं पुटीकुर्वन्तु । ततः चित्रे दर्शितेन क्रमेण उपविष्टवतः पाण्डा-प्राणिनः चित्रं सज्जीकुर्वन्तु ।



त्रिभिः सुकटक्रमैः शुनकशिशोः चित्रं रचयन्तु भवन्तः ।









# महाभारतम्

धर्मराजः द्यूते द्रौपदीम् अपि पणीकृत्य पराजयं प्राप्तवान् आसीत् इत्यतः पणीकर्तुं तत्समीपे किमपि न आसीत् एव । तदा दुर्योधनः अट्टहासपूर्वकम् - ''तां द्रौपदीम् अत्र आनयन्तु तावत् । तया एतस्य सभास्थानस्य सम्मार्जनं करणीयम् अस्ति'' इति उक्तवान् ।

एतादृशम् अन्याय्यं द्रष्टुम् अशक्नुवन् विदुरः उत्थाय दुर्योधनम् उद्दिश्य - ''मूर्ख! भवतः अविवेकिता एतत्सर्वं कारयति । पाण्डवाः के, ते कीदृशाः इति किं भवान् न जानाति ? ते तावत् धर्ममूर्तयः । द्रौपदी भवतः दासी कदापि भवितुं न अर्हति । धर्मराजः स्वातन्त्र्यहीनताप्राप्तेः अनन्तरम् एव तां पणीकृतवान् आसीत्'' इति उक्त्वा सभाम् उद्दिश्य - ''अयि भोः सभासदः, अस्माकं पुरतः किम् एतत् प्रवर्तते ? दुर्योधनस्य मूढताम् अविवेकितां च दृष्ट्वा अपि वयं किमर्थं मौनेन व्यवहरन्तः स्मः ? हा विधे! कोऽयं विकटविलासः भवतः !!'' इति उक्त्वा उपविष्टवान् ।

दुर्योधनः एतत् सर्वं श्रुत्वा अपि अशृण्वन् इव व्यवहरन् प्रातिकामिनामकम् आहूय - ''इदानीम् एव अन्तःपुरं गत्वा भवान् द्रौपदीम् अत्र आनयतु'' इति सूचितवान् ।

दुर्योधनस्य आज्ञां शिरसा वहन् प्रातिकामिः पाण्डवशिबिरस्थायाः द्रौपद्याः समीपं गत्वा ताम् उद्दिश्य - ''पाञ्चालि ! भवत्याः पतिः धर्मराजः दुर्योधनेन आयोजिते द्यूते भवतीं पणीकृत्य पराजयं प्राप्तवान् अस्ति । अतः इदानीं राज्ञः



दुर्योधनस्य आज्ञा अस्ति यत् भवत्या झटिति धृतराष्ट्रप्रासादं प्रति आगन्तव्यम्'' इति सूचितवान् ।

''क्षत्रियकुलीयः कदाचित् वा किं पत्नीं पणीकर्तुं शक्नुयात् ? अविश्वसनीयम् एतत् । तत्र किं प्रवृत्तम् इति आदौ वदतु तावत्'' इति उक्तवती द्रौपदी ।

''धर्मराजः सर्वस्वं पणीकृत्य पराजयं यदा प्राप्तवान् तदा अनन्यगतिकतया सहोदरान्, आत्मानं, भवतीं चापि पणीकृतवान् । तदापि तेन पराजयः एव प्राप्तः'' इति द्यूतवृत्तान्तं सङ्क्षेपेण उपवर्णितवान् प्रातिकामिः ।

''एवं तर्हि भवान् इदानीम् एव सभां गत्वा धर्मराजः आत्मानं पणीकृत्य पराजयं प्राप्य मां पणीकृतवान् उत मां प्रथमं पणीकृत्य ततः आत्मानं पणीकृतवान् इति ज्ञात्वा आगच्छतु'' इति सूचितवती द्रौपदी ।

प्रातिकामिः द्यूतस्थलं प्रत्यागत्य धर्मराजम् उद्दिश्य द्रौपद्याः सन्देशं निवेदितवान् । एतत् श्रुतवतः धर्मराजस्य दुःखम् उद्गतम् । सः किमपि वक्तुम् अशक्नुवन् अश्रूणि स्रावयन् मौनं स्थितवान् ।

तदा दुर्योधनः प्रातिकामिम् उद्दिश्य - ''तां मद्वचनैः वदतु यत् भवती एव सभाम् आगत्य प्रश्नेन स्वसन्देहं परिहर्तुम् अर्हति इति'' इति आज्ञापितवान् ।

प्रातिकामिः पुनरपि द्रौपदीसमीपम् आगत्य ''आर्ये, दुर्योधनः सूचयति यत् भवती स्वयं तत्र आगत्य स्वसन्देहं निवारयितुम् अर्हति इति । श्रुत्वा तत्रभवती प्रमाणम्'' इति निवेदितवान् ।

''प्रातिकामिवर्य ! दूतोचितं व्यवहारं कृतवान् भवान् । किन्तु सभां प्रति मम गमनं सर्वथा अनुचितम् । तेन कौरवाणाम् एव अपकीर्तिः भवेत् । अतिरथ-महारथाः यत्र तिष्ठन्ति, धर्ममूर्तयः यत्र भवन्ति तत्र स्त्रियाः मम गमनम् अनुचितम् एव । अतः अहं सभाम् आगन्तुं न अर्हामि'' इति उक्तवती द्रौपदी ।

प्रातिकामिः द्रौपद्याः आशयं सभां निवेदितवान् । तदा सभास्थाः वृद्धाः अन्ये धर्मपक्षपातिनः चापि दुर्योधनविरुद्धं किमपि वक्तुम् अशक्नुवन्तः शिरः अवनमय्य मौनं स्थितवन्तः ।

सभासदाम् असहायकतां जानन् धर्मराजः प्रातिकामिना सह द्रौपद्याः

आनयने सहायकरूपेण एकं दूतं प्रेषितवान् ।

सः दूतः अपि यदा निवेदितवान् तदा द्रौपदी रजस्वला सती अपि प्रातिकामिना सह आगत्य धृतराष्ट्रस्य पुरतः स्थितवती । पाण्डवाः एतत् दृश्यं द्रष्टुम् अनिच्छन्तः शिरः अवनमय्य उपविष्टवन्तः आसन् ।

तेषां तादृशीं दुरवस्थां दृष्ट्वा सन्तोषम् अनुभवन् दुर्योधनः प्रातिकामिम् उद्दिश्य - "अये, किं विलम्बेन ? ताम् अत्र आकृष्य आनयतु तावत्" इति आदिष्टवान् ।

प्रातिकामिः द्रौपदीं स्प्रष्टुं भीतिम् अनुभवति स्म । अतः सः भीतः सन् एव सभासदः उद्दिश्य - "द्रौपद्याः विषये कीदृशः व्यवहारः करणीयः इति अभिप्रयन्ति भवन्तः ?" इति पृष्टवान् ।

प्रातिकामिः भीमदर्शनात् भीतः भवति इति चिन्तयन् दुर्योधनः दुश्शासनम् उद्दिश्य - "दुश्शासन ! ताम् अत्र आकृष्य आनयतु भवान् । एते असहायाः अस्मद्दासाः कमपि विरोधं कर्तुं तु नार्हन्ति एव" इति उक्तवान् ।

दुश्शासनः तु शिष्टाचारादिकं विस्मृत्य - "द्रौपदि ! इतः आगच्छतु भवती । भवत्याः पतयः इदानीम् अकिञ्चनाः, अस्माकं दासाः च । किं चिन्तनेन ? अग्रजे दुर्योधने अनुरागवती भवतु भवती । कौरवान् अस्मान् वृणोतु च" इति वदन् द्रौपद्याः समीपम् आगतवान् ।

द्रौपदी अवमानभरात् दुःखातिरेकात् च हस्ताभ्यां मुखम् आच्छाद्य गान्धार्याः समीपं गन्तुम् उद्युक्ता ।

तदा दुश्शासनः वेगेन तस्याः समीपं गत्वा - "इतः कुत्र पलायनं कर्तुम् इच्छति भवती ?" इति वदन् तस्याः धम्मिल्लम् आकृष्टवान् ।





पञ्चसु महाशूरेषु पतिवरेषु सत्सु अपि अनाथतां गता द्रौपदी भीत्या कम्पमाना क्षीणस्वरेण - "अये अविवेकिन् ! मानवत्याः स्त्रियाः सभायाम् उपस्थितिः एव अशोभावहा । अहं तु रजस्वला अस्मि । एवं स्थिते मम तत्र उपस्थितिः नितराम् अनुचितम् अगौरवकरं च" इति उक्तवती ।

तदा दुश्शासनः - "भवती रजस्वला वा भवतु, आर्द्रवसना वा भवतु । किं तेन अस्माकम् ? पाण्डवैः पणीकृता भवती अस्माकं दासानां दासी" इति वदन् तां केशेषु गृहीत्वा बलात् आकर्षन् सभामध्यं प्रति आनीतवान् ।

द्रौपद्याः धम्मिल्लः शिथिलीकृतः आसीत् । तस्याः वस्त्रम् अस्तव्यस्ततां गतम् आसीत् । लज्जया कोपेन च दह्यमाना आसीत् सा । सा उद्वेगपूर्णस्वरेण दुश्शासनम् उद्दिश्य - "अये दुर्मार्गगामिन् ! पितृतुल्येषु ज्येष्ठेषु उपस्थितेषु अवमानकर-स्थितौ मम स्थापनं न भूषणम् । अत्र स्थिताः सर्वे धर्मविदः एव । तथापि एतेषु एतादृशं घोरकृत्यं दृष्ट्वा अपि मौनं स्थितवन्तः यत् तत् मयि आश्चर्यं खेदं च जनयति । भरतवंशः अद्य निर्वीर्यः जातः अस्ति । एतम् अन्याय्यव्यवहारं निरोद्धुं भीष्मद्रोणादयः विदुरधृतराष्ट्रादयः चापि असमर्थाः इति भाति । हा, दुर्विधे !" इति वदन्ती पाण्डवान् दैन्येन क्रोधेन च दृष्टवती ।

एतत् श्रुत्वा दुश्शासनः क्रोधेन - "अये दासि ! विजृम्भतां कोपः" इति वदन् उपहसितवान् ।

तदा कर्णः, शकुनिः, दुर्योधनः इत्यादयः अट्टहासं कृतवन्तः । तेषां धाष्ट्र्यं दृष्ट्वा सर्वे खेदम् अनुभूतवन्तः ।

तदा भीष्मः उत्थाय उक्तवान् - "भद्रे, धर्माधर्मविषये चर्चां कर्तुं न अयं समयः । पञ्चानां पत्नीं भवतीं धर्मराजः पणीकृतवान् यत् तत् अपराधाय एव । सः पणनिमित्तं सर्वस्वम् अपि समर्पितवान् अस्ति । तथापि धर्ममार्गं तु न परित्यजेत् एव सः । धर्ममार्गानुयायिनः दैवम् एव रक्षति" इति ।

"एवं तर्हि अत्र किं वा प्रवृत्तम् ? धर्मराजः अनिच्छया एव द्यूते भागं वहन् वञ्च्यमानः सन् सर्वस्वं पणीकृतवान् वा सः ? पत्न्यादीनां पणीकरणं किं साधु ? अस्माभिः किं करणीयम् इदानीम् ? कुरुकुलवृद्धाः अस्माकम् अपि आश्रय-

दातारः । अतः इदानीं ते एव यथोचितं मार्गं निर्दिशेयुः'' इति वदन्ती अश्रूणि स्रावितवती ।

एतत् श्रुत्वा दुश्शासनः पुनरपि दुष्टवाक्यानि निन्दावाक्यानि च उक्तवान् ।

तदा भीमः धर्मराजम् उद्दिश्य - ''द्यूतकाराः अपि पत्नीं न पणीकुर्वन्ति । सकलैश्वर्यस्य पणीकरणम् अहम् अङ्गीकरोमि । किन्तु पाञ्चाल्याः पणीकरणं न सहे । एतादृशम् अनुचितकृत्यं कृतवतः भवतः हस्तौ अग्निना दग्धव्यौ । भ्रातः, सहदेव ! अग्निम् आनयतु तावत्'' इति उक्तवान् ।

एतत् श्रुत्वा अर्जुनः भीमम् उद्दिश्य - ''एतावत् एव सोढं भवता । इदानीं किम् अग्रजस्य मनसः खेदस्य जननेन ? धर्मराजः द्यूते स्वयं न प्रवृत्तः । अन्यः यदा द्यूतार्थम् आह्वयति तदा निराकरणं क्षत्रियधर्मः न । अतः अग्रजेन धर्ममार्गः एव आश्रितः । किन्तु दुष्टाः एतं कष्टगर्ते पातितवन्तः । धर्मराजेन अधर्ममार्गः तु सर्वथा न आश्रितः । यत् प्रवृत्तं तद्विषये अग्रजः न दोषभाक् । शान्तः भवतु भवान्'' इति उक्तवान् ।

द्रौपद्या पृष्टस्य उत्तरं यदा केनापि न दत्तं तदा धृतराष्ट्रपुत्रेषु अन्यतमः विकर्णः उत्थाय - ''अयि भोः मित्राणि ! द्रौपद्या पृष्टस्य प्रश्नस्य उत्तरं वदन्तु भवन्तः । कुरुवृद्धाः गुरवः च किमर्थं मौनं तिष्ठन्ति ?'' इति उच्चस्वरेण उक्तवान् ।

एतदनन्तरम् अपि कोऽपि किमपि न उक्तवान् । तदा विकर्णः पुनरपि उक्तवान् - ''भवन्तः न्याय्यं न उक्तवन्तः इत्यतः अहम् एव यथामति विवृणोमि । द्यूतस्य सुरापानस्य चापि काचित् मितिः अस्ति । तस्याः पालनात् एव मानवः सुखेन





तिष्ठेत् । किन्तु धर्मराजः धर्मपालनव्याजेन तां मितिम् अतिक्रम्य व्यवहरन् सर्वस्वं नाशितवान् । द्रौपदी यथा धर्मराजस्य पत्नी, तथैव अन्येषां पाण्डवानाम् अपि पत्नी । अतः द्रौपद्याः विषये धर्मराजस्य एकमात्रस्य अधिकारः नास्ति । अपमाननोद्देशेन तस्याः अत्र आनयनं सर्वथा अन्याय्यम् । एषः मम धर्मनिर्णयः'' इति उक्तवान् ।

विकर्णस्य अभिप्रायं खण्डयन् कर्णः - ''एतस्यां सभायां यद्विषये ज्येष्ठाः एव मौनिनः सन्ति तद्विषये भवतः अभिप्रायस्य आविष्कारः कथं वा युज्येत ? धर्मराजेन सर्वस्वं यदा पणीकृतं तदा एव द्रौपदी अस्मदधीना जाता । अतः एव खलु पाण्डवाः अपि एतद्विषये मौनेन सन्ति ? पञ्चपतियुक्ता एषा वेश्यासमा । अतः एषा अत्रैव विवस्त्रीकृता चेदपि न दोषः । दुश्शासन ! भवान् पाण्डवानाम् एतस्याः द्रौपद्याः च वस्त्राणि अपनीय आनयतु'' इति उक्तवान् ।

कर्णस्य वचनस्य श्रवणात् एव पाण्डवाः अमूल्यानि वस्त्राणि अपनीय पार्श्वे स्थापितवन्तः । दुश्शासनः द्रौपद्याः समीपं गत्वा तस्याः शाटिकाम् आक्रष्टुम् उद्युक्तः अभवत् ।

तदा अनन्यगतिका द्रौपदी कृष्णं शरणं गच्छन्ती - 'वस्त्रं ददातु कृपया' इति प्रार्थितवती । कृष्णः अदृश्यरूपेण तत्र उपस्थाय द्रौपद्याः शाटिकाम् अक्षयां कृतवान् । अतः यथा यथा दुश्शासनः तस्याः शाटिकाम् आकृष्टवान् तथा तथा उपरिष्टात् शाटिका वृद्धिं गता । अतः दुश्शासनः शाटिकां राशीकृतवान् चेदपि द्रौपद्याः शरीरे शाटिका यथापूर्वं स्थिता आसीत् । अन्ते दुश्शासनः निरन्तरं शाटिकाकर्षणात् श्रान्तः सन् पार्श्वे स्थितवान् ।

एतत्सर्वं दृष्ट्वा कोपं निग्रहीतुम् अशक्नुवन् भीमः हस्तेन भूमिं प्रताड्य - ''सर्वे शृण्वन्तु । द्रौपद्याः मानस्य भङ्गं कर्तुम् उद्युक्तस्य एतस्य दुश्शासनस्य उरः युद्धे विदार्य रक्तं पास्यामि । एषा मम प्रतिज्ञा'' इति उक्तवान् ।

अत्रान्तरे विदुरः उत्थाय हस्तौ उन्नीय - ''अयि भो सभासदः, द्रौपद्याः प्रश्नस्य उत्तरं न उक्तं चेत् अधर्मः आचरितः भवति । एतावत्सु प्राज्ञेषु सत्सु विकर्णः एकः एव स्वाभिप्रायं प्रकटितवान् । अधर्मः मौनं

सोढः चेत् अपि तस्य फलस्य अर्धभागः अस्माभिः सर्वैः प्राप्यते एव'' इति उक्तवान्। तदा अपि कोऽपि किमपि न उक्तवान् ।

कामातुरः दुर्योधनः द्रौपदीं पश्यन् - 'अत्र आगत्य उपविशतु' इत्येतं भावम् ऊरुं प्रदर्शयन् सूचितवान् ।

एतत् दृष्ट्वा पुनरपि क्रुद्धः भीमः - ''युद्धे गदया एतस्य दुराचारस्य दुर्योधनस्य ऊरोः भङ्गं करिष्यामि एव'' इति प्रतिज्ञां कृतवान् ।

तत्काले एव अनेकानि अपशकुनानि दृष्टानि तत्रत्यैः । एतस्मात् भीतः धृतराष्ट्रः - ''हे दुर्योधन ! का एषा अविवेकिता भवतः ? किमर्थं भवान् एतां द्रौपदीं बलात्कारेण सभां प्रति आनीतवान् ?'' इति पुत्रं तर्जयित्वा द्रौपदीं स्वसमीपम् आहूय - ''वत्से ! कुलदीपिका भवती । भवती यत् इच्छति तत् प्रार्थयतु तावत्'' इति सूचितवान् ।

तदा द्रौपदी - ''दास्यात् पाण्डवानां विमुक्तिः भवतु । ते स्वस्य आयुधानि पुनः प्राप्नुवन्तु'' इति प्रार्थितवती ।

''अहो, काचित् स्त्री पाण्डवान् अद्य उद्धृतवती !'' इति उपहासमिश्रितेन स्वरेण उक्तवान् कर्णः ।

भीमः रौद्रावेशं प्राप्य - ''अद्यैव सर्वान् शत्रून् संहरिष्यामि'' इति उद्घोषितवान् । तदा अर्जुनः धर्मराजः च महता कष्टेन तस्य सान्त्वनं कृतवन्तौ ।

अनन्तरं धर्मराजः धृतराष्ट्रम् उक्तवान् - ''आर्य ! अस्माभिः किं करणीयम् इति आदिशतु तावत्'' इति ।

''वत्स ! अनुजैः सह गत्वा भवान् इन्द्रप्रस्थे वसन् राज्यभारं निर्वहतु । द्यूतं स्नेहपूर्वकं प्रचलेत् इति उद्देशेन मया अनुमतिः दत्ता आसीत् । किन्तु इदानीं भासते यत् मया अनुचितं कृतम् इति । मम वृद्धत्वं मनसि निधाय मत्पुत्रैः कृतं दुष्कार्यं क्षाम्यतु कृपया । भवतां भाविजीवनं शुभमयं भवतु'' इति उक्तवान् धृतराष्ट्रः ।

पाण्डवाः ज्येष्ठानाम् अनुज्ञां प्राप्य इन्द्रप्रस्थं प्रति प्रस्थितवन्तः ।

- (अनुवर्तते)



# कपित्थवृक्षः

कपित्थफलानि गजेभ्यः विशेषतः रोचन्ते ।

गजः कपित्थफलानि महता सन्तोषेण गिलति । किन्तु तेषां फलानां सारम् उदरे रक्षन् सः निरुपयुक्तं त्वग्भागं बहिः विसृजति । अतः एव एतस्य फलस्य नाम 'फेरोनिया एलिफाण्टम्' इति जातम् अस्ति ल्याटिन्भाषायाम् . । विनायकचतुर्थ्यां, कपित्थफलानि विघ्नेश्वराय नैवेद्यरूपेण समर्प्यन्ते इति तु सर्वविदितम् । एतज्जातीयस्य फलस्य त्वग्भागः दृढः, सारभागः मृदुः च भवति इत्यतः आंग्लभाषया एतत् फलं 'वुड्एपल्' इति निर्दिश्यते । कपित्थफलस्य अन्तर्भागस्य उपयोगं कृत्वा ग्रीष्मकाले शीतलपानीयानि निर्मीयन्ते । तत्र प्रायः गुडः योज्यते, न तु शर्करा । कपित्थफलसारं, मधु, खण्डशर्करां च संयोज्य रुचिकरं मधुरभक्ष्यम् अपि निर्मीयते ।

कपित्थं हिन्दिभाषया 'कविताहि' इति ('कवात्' इति वा), गुजरातभाषया 'कोथाडे' इति, तेलुगुभाषया 'केलगचेट्टु' इति, तमिळभाषया 'विलम्बळम्' इति कन्नडभाषया 'बेल' इति च निर्दिश्यते ।

कपित्थवृक्षाः अरण्यप्रदेशे प्राधान्येन वर्धन्ते । क्वचित् गृहोद्यानेषु अपि एते दृश्यन्ते । दृढाभिः दीर्घाभिः शाखाभिः युक्तानाम् एतेषां दैर्घ्यं महत् न भवति । शाखाः घनरूपेण वर्धिताः दृश्यन्ते । एतस्य वृक्षस्य पुष्पाणि रक्तवर्णीयानि लघ्वाकारकाणि गुच्छरूपाणि च भवन्ति । फलानि पाटलवर्णानि भवन्ति । एतस्य त्वचः रूक्षाः भवन्ति । फलानि गोलाकाराणि सार्धद्व्यङ्गुलविशालानि च भवन्ति ।



# कश्यपकुलीयः आस्तिकः

पूर्वं कदाचित् भूलोके सर्पभयम् अधिकम् आसीत् । क्षेत्रेषु, नदीषु, सरोवरेषु, ग्रामनगरेषु चापि सर्पाः आधिक्येन दृश्यन्ते स्म । एवं स्थिते अरण्येषु तेषां स्थितिः कीदृशी इति पुनर्वक्तव्यं नास्ति खलु ? सर्पाणाम् आधिक्यस्य कारणतः जनाः बहुधा कष्टम् अनुभवन्तः आसन् ।

जनानाम् एतत् कष्टं निवारयितुम् इच्छन् कश्यपऋषिः स्वतपोबलेन कांश्चन मन्त्रान् दृष्टवान् । ते मन्त्राः सर्पाणां पीडायाः निवारणे सहायकाः आसन् । सर्पदंशनस्य औषधम् अपि अन्विष्टम् आसीत् तेन ।

कश्यपः स्वतपोबलेन मानसादेवीनामिकां देवतां सृष्टवान् आसीत् । सा सर्पाणां निग्रहणे अतिसमर्था आसीत् ।

जरत्कारुनामकः ऋषिः तां परिणीतवान् । तयोः आस्तिकः नाम पुत्रः जातः । सः बाल्यात् एव विष्णुभक्तः आसीत् ।

कदाचित् मृगयार्थं गतः परीक्षिद्राजः ध्यानकारणतः आतिथ्ये अनादरं प्रकटितवतः शमीकस्य कण्ठे मृतम् एकं सर्पं स्थापयित्वा प्रत्यागतवान् । किञ्चित् कालानन्तरं तत्र आगतः शमीकपुत्रः पितुः अपमाननात् क्रुद्धः सन् - ''एतस्य दुष्कृत्यस्य कर्ता सप्ताहाभ्यन्तरे सर्पदंशनेन मृतः भवतु'' इति शापं दत्तवान् । शमीकद्वारा एव एतां वार्तां ज्ञातवान् परीक्षिद्राजः सर्पदंशनात् आत्मनः रक्षणार्थं विशेषव्यवस्थां कृतवान् । सप्तमे दिने सूर्यास्तसमये राजा खादनार्थं फलस्य कर्तनं कृतवान् । तदा तत्र कीटरूपेण स्थितः सर्पः स्वस्य वास्तविकरूपेण प्रत्यक्षीभूय परीक्षिद्राजम् अदशत् । परीक्षिद्राजः प्राणैः वियुक्तः अभवत् । मुनिकुमारस्य शापः अवितथः न जातः । तस्य सर्पस्य नाम 'तक्षकः' इति ।

तक्षकस्य एतस्मात् कृत्यात् क्रुद्धः परीक्षिद्राजस्य पुत्रः जनमेजयः प्रतिज्ञां कृतवान् यत् प्रपञ्चे एकः अपि सर्पः यथा न भवेत् तथा करिष्यामि इति । ततः ऋषिणां मार्गदर्शनस्य अनुगुणं सर्पयागम् आरब्धवान् सः । ऋषीणां मन्त्रोच्चारणस्य प्रभावात् सुदूरस्थाः अपि सहस्राधिकाः सर्पाः यज्ञकुण्डे पतिताः, अग्नेः आहुतयः अभवन् च ।

एतत् दृष्ट्वा नितरां भीतः तक्षकः देवेन्द्रस्य सिंहासनस्य अधः निलीय स्थितवान् । ऋषीणां मन्त्रस्य प्रभावतः इन्द्रसहितं सिंहासनम् एव यज्ञशालां प्रति आगच्छत् । तक्षकः सिंहासनपादम् आवृत्य स्थितवान् आसीत् ।

तस्मिन् काले आस्तिकः जनमेजयसमीपं गत्वा स्वविद्याविवेकादिभिः तं सन्तोष्य प्रार्थितवान् यत् सर्पयागः स्थगनीयः इति । अत्रान्तरे तक्षकः, अन्य केचन सर्पाः च ततः पलाय्य स्वप्राणान् रक्षितवन्तः । 'आस्तिकः सर्पवंशनाशं निरुद्धवान् इत्यतः तं यः भक्त्या स्मरति सः सर्पभयात् मुक्तः भवति' इति पुराणानि कथयन्ति ।



# भवन्तः जानन्ति वा ?

१. पिशाचद्वीपः (डेविल्स् ऐल्याण्ड्) कुत्र अस्ति ?
२. भरतस्य समग्ररेल्वेमार्गस्य दैर्घ्यं कियत् ?
३. एषु दिनेषु केरलराज्ये निर्वाचनं प्रवृत्तं खलु ? तत्रत्यानि विधानसभास्थानानि कति ?
४. अस्माकं देशे कस्मिन् राज्ये आङ्गभाषा व्यवहारभाषा अस्ति ?
५. सुप्रसिद्धस्य पक्षिशास्त्रज्ञस्य सलीम् अलिवर्यस्य चरित्रेण सम्बद्धः पक्षी कः ?
६. गणितशास्त्रे 'लोगोरिथम्स्' कः रचितवान् ?
७. अस्माकं देशे अनिमेषन्-चलनचित्रस्य निर्माणार्थं स्वतन्त्रं चित्रीकरणालयं कः निर्मितवान् ? तच्च कुत्र अस्ति ? तत्र निर्मितं प्रथमचित्रं किम् ?
८. विश्वसंस्थायाः सुवर्णमहोत्सवः गतवर्षे प्रवृत्तः । तत्काले मलयाळभाषया भाषणं कर्तुं निमन्त्रिता अस्मद्देशीया का ?
९. विश्वसंस्थायाः सदस्यत्वम् अन्तिमतया प्राप्तवान् देशः कः ?
१०. अस्मद्देशतः गत्वा विश्वसंस्थासभायां सङ्गीतगोष्ठीं निर्वर्तितवती अद्वितीया गायिका का ?
११. विश्वसंस्थायाः व्यवहारभाषाः काः ?
१२. ऐदम्प्राथम्येन राष्ट्रियमहामार्गेण योजिते नगरे के ?
१३. विश्ववाणिज्यसंस्थायाः महानिर्देशकः (डैरेक्टर् जनरल्) कः ?
१४. विश्वचषकक्रिकेट्स्पर्धायाम् अतिन्यूनधावनानि प्राप्तवान् देशः पाकिस्तानदेशः । तेन कति धावनानि प्राप्तानि आसन् ? तत्काले केन देशेन सह सः क्रीडन् आसीत् ?
१५. आगामिन्यः विश्वचषकस्पर्धाः कुत्र प्रचलिष्यन्ति ?

## उत्तराणि

१. दक्षिणामेरिकादेशस्य ईशान्यदिशि 'फ्रेञ्चिगयाना' अस्ति । ततः समीपस्थः कश्चनः द्वीपः 'डेविल्स् ऐल्याण्ड्' इति उच्यते ।
२. ६२,००० कि.मी. ।
३. १४०.
४. नागाल्याण्ड्प्रदेशे ।
५. चटकः ।
६. जान्नेपियर् ।
७. दादासाहेबफाल्केप्रशस्तिं प्राप्तवान् डा. अक्किनेनी नागेश्वरराव् । हैदराबाद-नगरे । हार्ट् एण्टर्टैन्मेण्ट् नामकम् ।
८. माता अमृतानन्दमयी ।
९. क्रि.श. ४०५ - ४११ मध्यकाले ।
१०. एम्.एस्. सुब्बुलक्ष्मीवर्या ।
११. अरबिक्, चैनीस्, इङ्ग्लीष्, फ्रेञ्च्, स्पानिष्, रशियन् च ।
१२. देहली चन्दीगढनगरं च ।
१३. रिनेटो रुगीरो ।
१४. ७४ धावनानि । १९९२तमे वर्षे इङ्ग्लण्ड्देशेन सह ।
१५. इङ्ग्लण्ड्देशे ।

# सुवर्णसमयस्य प्रश्नावली - १ - उत्तराणि



१. स्कैड् लीडर् राकेशशर्मा । सः सोवियत्व्योमनौकायाः सोयुज्डिलो नामिकायाः साहाय्येन द्वाभ्यां सोवियत्- व्योमगामिभ्यां सह १९८४तमे वर्षे एप्रिल्मासस्य ५ दिनाङ्के अन्तरिक्षयात्रां कृतवान् ।

२. तस्याः सूर्यघट्याः नाम 'सम्राड्यन्त्रम्' इति । जयपुरे स्थिता एषा प्रपञ्चस्तरे अतिमहत्त्वेन सुविख्याता ।

३. 'सेरस्' इत्येषः कुज-गुरुग्रहयोः कश्चन उपग्रहः । (आस्टेरायिड्) ज्ञातेसु बृहत्तमः उपग्रहः एषः एव । १८०१तमे वर्षे जनवरीमासे प्रथमे दिनाङ्के एषः अन्विष्टः ।

४. जगन्नाथदेवालयः, यश्च पुरीनगरे अस्ति । श्रीकृष्णः गोकुलतः मथुराम् आगतवान् यत् तं सन्दर्भं निमित्तीकृत्य प्रचलिष्यमाणे उत्सवे विग्रहान् महति रथे स्थापयित्वा रथयात्रा क्रियते । सहस्राधिकाः भक्ताः एतं रथं भक्त्या आकर्षन्ति ।

५. फेब्रवरीमासस्य २८तमे दिनाङ्के । प्रतिदिनं मीटरौन्नत्यं सरन् सः २७ दिनेषु २७ से.मी. क्रमणं कृत्वा २८ दिने उपरि आगमिष्यति ।

34+41=1

34=41-7

७. i महाराष्ट्रियौ ।
ii गोण्डकुलीयः । (म.प्र.)
iii कूर्ग्प्रदेशीयाः । (कर्णाटकम्)
iv नागाल्याण्ड्प्रदेशीयः ।

**अन्तरिक्षरहस्यम्**

पृष्ठतः उत्पन्नः शब्दः व्योमगामिना न श्रूयते । यतः चन्द्रलोके शब्दश्रवणानुकूलः परिसरः न ? भवति ।





# पाकपिशाची

बापूनगरम् इति कश्चन ग्रामः । तस्मिन् ग्रामे नागराजः नाम कश्चित् निवसति स्म । तस्य एका पुत्री । तस्याः नाम सुशीला इति । सा यदा प्राप्तवयस्का जाता तदा नागराजः चिन्तितवान् यत् एतस्याः विवाहः निर्वर्तनीयः इति । विवाहार्थं धनम् आवश्यकं खलु ? अतः सः स्वस्य एकमात्रसम्पत्तिं कृषिभूमिं पञ्चाशत् सहस्त्ररूप्यकैः विक्रीतवान् ।

पितुः एषः निर्णयः सुशीलायै सर्वथा न अरोचत । अतः सा पितरम् उद्दिश्य - "तात ! एतस्य धनस्य अर्धभागं भवान् विवाहार्थं रक्षतु, अवशिष्टं धनं दत्त्वा एकं गृहं क्रीणातु । अन्यथा मम विवाहस्य अनन्तरं भवतः परावलम्बिता स्यात्, ततः दयनीया स्थितिः च भवेत्" इति उक्तवती ।

पुत्र्याः अनुरोधस्य कारणतः नागराजः एकं गृहं क्रीतवान् । तत् गृहम् आनन्दनामकस्य आसीत् । अल्पे एव वयसि आनन्दस्य पिता दिवं गतवान् आसीत् । माता महता कष्टेन पुत्रं पालितवती आसीत् । यदा माता अपि दिवं गता तदा आनन्दः चिन्तितवान् आसीत् यत् गृहं विक्रीय ततः प्राप्तेन धनेन वाणिज्यं करणीयम् इति । तस्मिन् समये एव नागराजः तत् गृहं पञ्चविंशतिसहस्त्रं रूप्यकाणि दत्त्वा क्रीतवान् ।

सप्तहात् अनन्तरं नागराजः वस्तूनि वृषभशकटे आरोप्य पुत्र्या सह भाटकगृहात् स्वगृहम् आगतवान् । गृहस्य स्वच्छीकरणं यावत् समाप्तं तावता सायङ्कालः जातः ।

पाकं कर्तुम् अनिच्छन्ती सुशीला अनन्यगतिकतया पाकं कर्तुम् उद्युक्ता सती - "अस्मिन् समये या कापि आगत्य यदि पाकं कुर्यात् तर्हि वरम् अभविष्यत्" इति स्वगतम् उक्तवती ।

तस्मिन् क्षणे एव - " अये, अस्मिन् समये केवलं न, अपि तु दिने द्विवारम् अपि



अहम् एव पाकं कर्तुं सिद्धा अस्मि'' इति वदन्ती काचित् पिशाची तत्र प्रत्यक्षा अभवत् । पिशाचीं दृष्ट्वा सुशीला भीत्या आक्रन्दनं कृतवती ।

तदा सा पिशाची अभयं ददती दक्षिणहस्ते विद्यमानां दर्वीम् इतस्ततः चालयन्ती उक्तवती - ''वत्से, अलं भयेन । अहं न अन्या । एतत् गृहं यः विक्रीतवान् तस्य माता अस्मि । पूर्वम् अहं विभिन्नगृहेषु पाकं कुर्वती तं पोषितवती । पाकः एव मम वृत्तिः आसीत् । तादृशी अहं पाकं विना महत् कष्टम् अनुभवन्ती अस्मि । अतः एव अत्र पाकार्थम् आगता'' इति ।

एतत् श्रुत्वा सुशीला भीत्या कम्पमाना सती प्रकोष्टं गत्वा पितरं प्रवृत्तं समग्रं निवेदितवती । तया उक्तं श्रुत्वा सोऽपि भीत्या - ''किम् एतत् ! अहो मूर्खता मम । पिशाचावासभूतं गृहं क्रीतं खलु मया'' इति सखेदम् उक्तवान् ।

तदा सुशीला पितरं सान्त्वयन्ती - ''तात ! भवान् भीतः मा भवतु । यत् प्रवृत्तं तद्विषये पश्चात्तापेन किं प्रयोजनम् ? यद्यपि सा पिशाची, तथापि स्वभावेन मृदुः इव भासते । अतः अलं चिन्तया'' इति उक्तवती ।

नागराजः किमपि वक्तुम् उद्युक्तः । तावति काले पाकशालातः - ''पाकः सिद्धः अस्ति । भोजनार्थम् आगच्छन्तु'' इति पिशाच्याः ध्वनिः श्रुतः । सुशीला तस्याः पिता च भीत्या कम्पमानौ एव पाकशालां गतवन्तौ । पाकः तु रुचिकरः आसीत् । एतं विषयं तां वदेम वा न वा इति यावत् तौ चिन्तयन्तौ आस्तां तावता पिशाची ''श्वः शीघ्रम् आगत्य पाकं कृत्वा गमिष्यामि'' इति उक्त्वा ततः अदृश्या अभवत् ।

एवं पाककार्यभारस्य निर्वहणस्य अभावात् सुशीलया दिने समयः तु प्राप्यते स्म, तथापि सप्ताहाभ्यन्तरे तस्याः चिन्ताभारः प्रवृद्धः । यतः पिशाच्याः पाके वैविध्यं तु न भवति स्म । अन्धकारप्रसारस्य अनन्तरं पिशाच्या पाककार्यस्य आरम्भः क्रियते स्म इत्यतः पाकसमाप्तौ अर्धरात्रम् अतीतं भवति स्म ।

एतस्मात् खिन्ना सुशीला एकस्मिन् दिने सायङ्काले पिशाच्याः आगमनानन्तरं ताम् उद्दिश्य - ''इतः परं पाकम् अहमेव करिष्यामि । भवत्याः पुत्रः आनन्दः पाकं

कर्तुं बहुकष्टम् अनुभवन् अस्ति इति वार्ता श्रुता । भवती तत्र गत्वा पाकं कुर्वती तस्य साहाय्यं करोतु'' इति सूचितवती ।

''तत् मया न शक्यते एव । अहं पिशाची अभवम् इति सः जानाति चेत् महत् दुःखम् अनुभविष्यति । सः प्रभूतं धनं सम्पादयन् अस्ति । आवश्यकं चेत् पाचकेन पाकं कारयितुं तस्य सामर्थ्यम् अस्ति एव । अतः किं तत्र मम गमनेन'' इति उक्तवती पिशाची ।

'अहो, एषा अनुक्तग्राहिणी पिशाची अस्ति । अतः एतस्याः निवारणं कष्टकरम् एव' इति चिन्तयन्ती सुशीला - ''भवत्या कृतः पाकः अस्मभ्यं न रोचते'' इति उक्तवती ।

''किं मया कृतः पाकः न रोचते ! मम पाके दोषं पश्यन्त्याः भवत्याः कियत् धाष्टर्यम् ! भोः, रुष्टा अहम् अनर्थकारिणी भवामि । स्मरतु एतत् । मया कृतः पाकः विना विरोधं भोक्तव्यः भवद्भ्याम् । अन्यथा महत् कष्टं सम्मुखीकरणीयं भवेत्'' इति कोपेन उक्तवती पिशाची ।

पिशाचीतः नितरां भीता सुशीला तस्याः पिता च मौनम् आश्रितवन्तौ । किन्तु तयोः विषये असन्तुष्टा पिशाची दौष्ट्यम् आरब्धवती । एकदा सा पाके अधिकं लवणं योजयति स्म, अन्यदा तैलम् अधिकं पातयति स्म । यावद्भिः वस्तुभिः मासं यावत् पाकं कर्तुं शक्यम् अभविष्यत् तावन्ति वस्तूनि सप्ताहाभ्यन्तरे एव समापयति स्म पिशाची ।



अथ कदाचित् रात्रौ पिता पुत्री च भोजनं कुर्वन्तौ आस्ताम् । तस्मिन् समये एव बन्धूनां विवाहार्थं ग्रामम् आगतवती सुशीलायाः बाल्यसखी राधा सुशीलां द्रष्टुम् इच्छन्ती तत्र आगतवती । असमये भोजनं कुर्वन्तौ तौ दृष्ट्वा सा - ''किमर्थम् इदानीं भोजनं कुर्वन्तौ स्तः ?'' इति आश्चर्येण पृष्टवती ।

''देवालये हरिकथां श्रुत्वा आवाम् इदानीम् आगतवन्तौ । अतः भोजने विलम्बः । भवती कुशलिनी खलु ?'' इति मन्दहासपूर्वकं पृष्टवती सुशीला ।

भोजनानन्तरं सख्यौ प्रकोष्ठे उपविश्य वार्तालापम् आरब्धवत्यौ । वार्तालापमध्ये सुशीला पाकपिशाच्याः विषयम् उक्तवती ।

''एतस्याः पाकपिशाच्याः पुत्रः आनन्दः नगरे वासं कृत्वा सम्यक् धनं सम्पादयन्



अस्ति इति एषा पिशाची एव उक्तवती । पुत्रस्य कृते पाकं कर्तुं नगरं गत्वा यदि तत्रैव सा वासं कुर्यात् तर्हि पीडा निवृत्ता भवेत्'' इति उक्तवती सुशीला ।

सुशीलायाः कथनं श्रुत्वा तस्याः सखी राधा आश्चर्यं प्रकटयन्ती - ''किम् एषा पिशाची आनन्दस्य माता ? आनन्दः तदा तदा मम गृहम् आगच्छन् भवति । महान् चतुरः अस्ति सः । वृथा समयं न यापयति सः । अनावश्यकरूपेण अधिकं सम्भाषणम् अपि न करोति । परन्तु सः बहु खिन्नः अस्ति । परम्पराप्राप्तं गृहं विक्रीतम् इति तस्य महत् दुःखम् अस्ति । यतः एतस्मिन् गृहे तस्य मातुः यावती प्रीतिः आसीत् तावती एव प्रीतिः एतस्य अपि अस्ति । 'धनस्य आवश्यकता महती आसीत् इत्यतः तत् गृहम् अहं विक्रीतवान् । वस्तुतः गृहस्य विक्रयणे मम इच्छा सर्वथा न आसीत्' इति मम पितरं वदन् भवति सः'' इति उक्तवती ।

''किन्तु अनिष्टकरस्य एतस्य गृहस्य क्रयणात् अस्माभिः कीदृशं सुखं प्राप्यमाणम् अस्ति इति सः कथं वा जानीयात् ?'' इति सुशीला कोपेन उक्तवती ।

राधा किञ्चित्कालस्य मौनस्य अनन्तरं झटिति उत्साहेन उत्थाय - ''भोः सुशीले ! एकः उपायः लब्धः !! तस्य आश्रयणात् भवतां कष्टम् अपि निवारितं भविष्यति । आनन्दस्य कष्टम् अपि निवारितं भविष्यति '' इति वदन्ती सुशीलायाः कर्णे मन्दस्वरेण किमपि उक्त्वा - ''भवती इच्छति चेत् एवम् एव करवाम । अस्माकम् उपायः एतया पिशाच्या अपि न ज्ञातव्यः । शुभकार्यं नगरे एव भवतु नाम'' इति उक्तवती ।

''भवती यथा वदति तथा'' इति वदन्ती सुशीला अङ्गीकारं सूचितवती । प्रातःकाले पिशाच्याः आगमनात् पूर्वम् एव राधा नगरं प्रति प्रस्थितवती । किञ्चित्समयानन्तरं पाकपिशाची आगतवती । तया सह सुशीला सम्भाषणं कुर्वती - ''नगरे अस्माकं कानिचन कार्याणि सन्ति । तानि त्वरया एव करणीयानि । अतः अस्माभिः पञ्चदश दिनानि तत्रैव वासः करणीयः भवेत्'' इति उक्तवती ।

सुशीलायाः कथनं श्रुत्वा पाकपिशाची - ''पञ्चदशदिनात्मकः विरामः ! तावन्ति

दिनानि भवती अत्र न भविष्यति ? तर्हि तत्काले मम किं वा कार्यं स्यात् ?..... अथवा भवतु, विरामं दत्तवती अस्मि । विरामं समाप्य शीघ्रम् आगन्तव्यम् । नो चेत् एतत् गृहं धूलिसात् करिष्यामि । स्मरतु एतत्'' इति उक्तवती ।

अनन्तरदिने एव सुशीला नागराजः च नगरं गतवन्तौ । राधायाः तस्याः अग्रजस्य च सहकारेण सप्ताहाभ्यन्तरे एव आनन्द-सुशीलयोः विवाहः सम्पन्नः । सप्ताहं यावत् नगरे स्थित्वा सुशीला पत्या पित्रा च सह ग्रामम् आगतवती । तेषाम् आगमनसमये पिशाची उपसेचनस्य पेषणं कुर्वती आसीत् ।

सुशीला तस्याः समीपं गत्वा - ''अम्ब ! भवत्याः पुत्राय उपसेचनं सर्वथा न रोचते । अतः भवती क्वथितं ताक्रं च सज्जीकरोतु'' इति उक्तवती । तदा पाकपिशाची आश्चर्येण - ''भवती नगरं गत्वा मम पुत्रं परिणीय आगतवती वा ?'' इति पृष्टवती ।

''आम् । भवत्याः पुत्रः इदानीं मम पतिः । सः कानिचन दिनानि अस्मिन् गृहे एव वासं करिष्यति। प्रतिदिनं भवत्या पाकः सम्यक् करणीयः । मम कृते लड्डुक-पायसादीनि प्रतिदिनं सज्जीकरणीयानि । प्रवासकारणतः शिरोवेदना अस्ति । अतः शयनं करोमि'' इति उक्तवती सुशीला ।

तदा पिशाची कोपेन - ''तिष्ठतु भोः ! भवत्याः रहस्यव्यवहारम् अहं ज्ञातवती । रहस्येन नगरं गत्वा मम पुत्रं परिणीय मम बन्धनात् मुक्तिं प्राप्तवती भवती एतादृशम् उपायं कदा चिन्तितवती आसीत् ? भवतु ! भवती मत्तः कार्यं कारयन्ती सुखेन जीवनं यापयितुम् इच्छति वा ? तत् अहं न सहे । अन्यच्च माम् अस्यां स्थितौ मम पुत्रः पश्येत् तर्हि सः खेदम् अनुभवेत् । अतः पाकशालाकार्यं भवत्यै एव अर्पयामि । मम पुत्रं जागरूकतया पश्यतु'' इति उक्त्वा ततः अदृश्या अभवत् ।

श्वश्रूविषयकस्य गौरवस्य कारणात् सुशीला पाकपिशाच्याः विषयं पतिं न उक्तवती । विक्रीतं गृहं लब्धम् इत्यतः, अनुकूलपत्नी प्राप्ता इत्यतः च आनन्दः सन्तुष्टः जातः आसीत् ।






# वानरेण आनीता सम्पत्तिः

कस्मिंश्चित् नगरे काचित् निर्धना स्त्री आसीत् । तस्याः पतिः उत्तमः आसीत् । परन्तु सः स्वजीवने किञ्चिदपि धनं अनवशेष्य, सर्वं व्ययीकृतवान् आसीत्, पत्नीं, पुत्रं च निर्गतिकौ कृत्वा एव दिवं गतः आसीत् ।

यदा पिता दिवं गतः तदा पुत्रः रङ्गः पञ्चदशवर्षीयः आसीत् । सः स्वभावेन अतीव अलसः आसीत् । सर्वदा शयानः एव समयं यापयति स्म सः ।

''देवस्य सृष्टिः एव तथा । मया किं कर्तुं शक्यते ?'' इति रङ्गस्य मातुः चिन्तनम् आसीत् । अतः सा पुत्रं कदापि न तर्जयति स्म । स्वयमेव सर्वत्र कार्यं कृत्वा, लब्धेन धनेन पुत्रस्य पोषणं करोति स्म । यदा माता उत्थापयति स्म तदा रङ्गः भोजनं कृत्वा पुनः शयनं करोति स्म ।

'जीवननिर्वहणार्थं कोऽपि उद्योगः आश्रयणीयः । अन्यथा जीवनं कष्टकरं भविष्यति' इति ग्रामज्येष्ठाः रङ्गं तदा तदा बोधयन्ति स्म । किन्तु तादृशं बोधनं श्रुत्वा अपि रङ्गः अश्रुतवान् इव व्यवहरन् आलस्येन शयानः दिनानि यापयति स्म ।

रङ्गस्य गृहस्य पार्श्वे एव रामनाथः नाम कश्चित् वणिक् आसीत् । 'सः वाणिज्यार्थं चीनादेशं गच्छति' इति वार्तां रङ्गस्य माता श्रुतवती । सौभाग्यवशात् तदा एव सा मासिकधनं प्राप्तवती आसीत् । अतः सा मासिकधने पञ्च रजतनाणकानि पुत्राय दत्त्वा उक्तवती - ''पुत्र ! एतानि नाणकानि रामनाथाय ददातु । एतेन धनेन यत् वस्तु लभ्यते तत् वस्तु आनयतु इति रामनाथं वदतु । सः दयालुः अस्ति । अन्येषां दुःखे सः अनुकम्पं प्रदर्शयति । अस्मिन् स्वार्थिजनपूर्णे जगति तादृशाः महानुभावाः विरलाः एव । सः रामनाथः यत् वस्तु आनयति तेन भवान् अपि वाणिज्यं कर्तुं शक्नोति'' इति ।

मातुः गमनानन्तरं रङ्गः जृम्भणं कुर्वन् उत्थितवान् । मात्रा दत्तानि पञ्च रजतनाणकानि स्वीकृत्य रामनाथस्य गृहं गतवान् । तत्र मात्रा उक्तानि वचनानि रामनाथं सूचितवान् सः ।

रङ्गं दृष्टवतः रामनाथस्य मनसि करुणा उत्पन्ना, एतेन अल्पेन धनेन एषः कीदृशं वाणिज्यं कुर्यात् ? तेन कियान् लाभः भवेत् ?, इति रामनाथः जानन् अपि "तथैव भवतु" इति उक्त्वा पञ्च रजतनाणकानि स्वीकृतवान् ।

रामनाथः सहवणिग्भिः सह मिलित्वा नौकाम् आरुह्य प्रयाणम् आरब्धवान् । अदृष्टवशात् प्रयाणे कुत्रापि विघ्नः न आगतः । यत्र यत्र नौकास्थानम् आसीत् तत्र सर्वत्र वाणिज्यं सम्यक् अभवत्। अन्ते ते चीनादेशं प्राप्तवन्तः । चीनादेशे सर्वे वणिजः स्ववस्तूनि विक्रीय तेन धनेन शाटिकाः, दन्तवस्तूनि, रत्नानि इत्यादीनि वस्तूनि यथाशक्ति क्रीतवन्तः । पुनः प्रतिगमनस्य प्रयाणम् आरब्धवन्तः ।

दशदिनानन्तरं रामनाथः रङ्गेण दत्तस्य धनस्य विषयं स्मृतवान् । 'एतेन धनेन किमपि वस्तु आनयतु' इति रङ्गः उक्तवान् आसीत् । परन्तु वाणिज्ये मग्नः रामनाथः एतं विषयम् एव सर्वथा विस्मृतवान् आसीत् । आत्मना क्रीतेषु वस्तुषु यत्किञ्चित् वस्तु दातुमपि न शक्नोति स्म सः । यतः तावन्न्यूनमूल्यस्य वस्तु रामनाथस्य समीपे न आसीत् एव ।

अतः रामनाथः स्वसमस्याम् अन्यान्




वणिजः निवेद्य उक्तवान् - "मया दोषः कृतः । पुनः नौकां चीनादेशं नयाम" इति ।

परन्तु वणिक्षु कोऽपि तत् वचनम् न अङ्गीकृतवान् । केनचित् बालेन दत्तेन अल्पेन धनेन यत्किञ्चित् वस्तु क्रेतुं किं नौका प्रतिनेतव्या ? किं क्षुल्लककारणेन समयव्ययः धनव्ययः च करणीयः ? मध्येमार्गं कुत्रापि किमपि क्रीणातु । अन्यथा धनम् एव प्रत्यर्पयतु" इति उक्तवन्तः सहवणिजः । अतः रामनाथः प्रतिगमनविचारं परित्यक्तवान् ।

केषाञ्चित् दिनानाम् अनन्तरं नौकया उत्तरद्वीपस्थं नौकास्थानं प्राप्तम् । नौकायाः समीपं केचन भिक्षुकाः आगतवन्तः । तेषु कस्यचित् समीपे त्रयः वानराः आसन् । तेषु द्वौ चतुरौ आस्ताम् । स्वामी यथा वदति तथा ताभ्यां वानराभ्यां क्रियते स्म । परन्तु



अपरः तृतीयः वानरः वृद्धः आसीत् । सः न क्रीडति स्म । समुद्रम् एव पश्यन् उपविष्टः आसीत् सः ।

तान् वानरान् दृष्ट्वा रामनाथः चिन्तितवान् - 'रङ्गेन दत्तैः रजतनाणकैः एषु कश्चन वानरः क्रेतव्यः । तदा मम कर्तव्यं समाप्यते' इति ।

सः वानराणां स्वामिनं पृष्टवान् - ''एतेषु वानरेषु एकं विक्रेतुम् अर्हति वा भवान् ?'' इति ।

''एतेषु एकं विक्रेतुम् अहं शक्नुयाम् एव । कियत् मूल्यं दद्यात् भवान् ?'' इति पृष्टवान् वानरस्वामी ।

''पञ्च रजतनाणकानि दास्यामि । इति उक्त्वा रामनाथः तस्य धनस्य प्राप्तिं विस्तरेण निवेदितवान् ।

''एवं तर्हि भवान् एतं वृद्धं वानरं क्रीणातु तावत्'' इति उक्तवान् सः वानरस्वामी ।

तदा रामनाथः प्रार्थितवान् - ''वृद्धः वानरः मह्यं मास्तु । चतुरौ वानरौ ददातु तावत्'' इति ।

''भवान् शतं रजतनाणकानि ददाति चेदपि तौ द्वौ न ददामि । यतः एताभ्याम् एव मम उदरपोषणं भवति । यावत् मयि शक्तिः आसीत् तावत् मम पत्नी पुत्राः च मां प्रीत्या पश्यन्ति स्म । परन्तु इदानीं ते सर्वे मत्तः दूरङ्गताः सन्ति । तथापि जीवितुं मयि इच्छा अस्ति । अहमपि एतं वृद्धं वानरं पञ्चभिः नाणकैः क्रीतवान् । परन्तु कोऽपि लाभः न जातः । कामपि क्रीडां न जानाति एषः वानरः । अतः एतम् एव वानरं भवान् क्रीणातु'' इति वदन् स्वामी अनुरोधं कृतवान् ।

अनन्यगतिकतया रामनाथः तं वृद्धं वानरं क्रीत्वा नौकाम् आरूढवान् । सः वानरः अपि रङ्गः इव अलसः आसीत् । यत्किञ्चित् खादित्वा सर्वदा शयनं करोति स्म सः । तस्य बन्धनस्य अपि आवश्यकता न आसीत् ।

केषाञ्चित् दिनानाम् अनन्तरं नौकया मौक्तिकद्वीपः प्राप्तः । तं द्वीपं परितः समुद्रे मौक्तिकानि लभ्यन्ते स्म । यदा वणिजः आगच्छन्ति तदा तत्रत्याः जनाः जले निमज्य, तरणं कृत्वा मौक्तिकानि आनीय विक्रयणं कुर्वन्ति स्म । स्वभाग्यानुसारं बृहत् मौक्तिकानि प्राप्नुवन्ति स्म वणिजः ।

एषा नौका अपि मोक्तिकनिमित्तमेव तं द्वीपम् आगता आसीत् । यदा नोकास्थानं प्रति नौका आगता तदा तत्रत्याः बालाः कोलाहलं कुर्वन्तः आगत्य जले उत्पतितवन्तः ।

तावत्पर्यन्तं शयानः स्थितः वानरः बालकानां कोलाहलेन जागरितः सन् उत्थाय समुद्रे उत्पतितवान् । एतत् दृष्टवान् रामनाथः - "रङ्गेण एषः वानरः अपि न प्राप्यते प्रायः" इति चिन्तितवान् ।

किञ्चित्कालानन्तरं सः वानरः हस्तद्वयेन मौक्तिकानि स्वीकृत्य नौकाम् आरुह्य तत्र स्थापयित्वा पुनः जले पतितवान् । एवं किञ्चित्कालाभ्यन्तरे एव शताधिकानि मौक्तिकानि आनीतवान् सः वानरः ।

अन्ये वणिजः स्वेच्छानुसारं मौक्तिकानि क्रीतवन्तः । कैश्चित् लघूनि द्वित्राणि मौक्तिकानि लब्धानि । कैश्चित् तदपि न लब्धम् । परन्तु वानरेण आनीतेषु मौक्तिकेषु बृहन्ति, लघूनि च मौक्तिकानि आसन् । यतः पूर्वं सः वानरः मौक्तिकद्वीपे एव आसीत् । एतस्य स्वामी ग्रामे वसति स्म । सः एतं वानरं मौक्तिकानाम् आनयनं पाठितवान् आसीत् । केषाञ्चित् दिनानाम् अनन्तरं सः स्वामी दिवं गतः आसीत् । अनन्तरं केचन नाविकाः वानरं पालितवन्तः आसन् । परन्तु तस्य आलस्यं दृष्ट्वा खिन्नाः ते तं वानरक्रीडकेभ्यः विक्रीतवन्तः आसन् । सः एव वानरः इदानीं रङ्गाय निधिं दत्तवान् आसीत् । तस्य वानरस्य पूर्वतनः स्वामी वानरस्य कार्यसामर्थ्यं ज्ञातुम् असमर्थः जातः आसीत् ।

रामनाथः नगरं प्रत्यागत्य सर्वाणि मौक्तिकानि रङ्गाय दत्तवान् । एतया सम्पत्या रङ्गः धनिकः जातः । सुन्दरं गृहं निर्मीतवान् सः । यथा मौक्तिकद्वीपं दृष्ट्वा वानरस्य आलस्यं परिहृतं तथा कार्यं यदा लब्धं तदा रङ्गस्य आलस्यम् अपि दूरं गतम् । सः प्रतिवर्षं एकवारं मौक्तिकद्वीपं प्रति वानरं नयति स्म । ततः मौक्तिकानि आनीय विक्रयणं करोति स्म । एवं अल्पे एव काले एव रङ्गः महाधनिकः भूत्वा काञ्चित् सुन्दरीं गुणवतीं तरुणीं परिणीय सुखेन जीवितवान् ।



# चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

विजितां शीर्षिकां अक्टोबर् - १९९६ मासे प्रकटयिष्यामः ।



MAHANTESH C. MORABAD



MAHANTESH C. MORABAD

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा अगस्ट् - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया ।

**चन्दमामा(संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, २ घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५**

---

'जून्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -

प्रथमचित्रम् - **बालेयं तुष्यति अर्चनात् लक्ष्मीं भक्त्या ।**

द्वितीयचित्रम् - **बालोऽयं गच्छति अर्जयितुं लक्ष्मीं शक्त्या ।**

प्रेषिका - कु. प्रेमा, करुमने, आडुकट्टा, सिद्दापुरम् - ५८१ ३५५ (उ.क.) कर्णाटकम्


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते)- रू. ७२-००

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

**डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास् - ६०० ०२६**

**Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.**